# KĀVYA PRAKĀSH

OF

# MAMMATACHĀRYA

Edited by

**Pt. Girdhar Lal Vyās**
**Sahitya Shāstri, Sahityadhyapak,**
**Shri Mahārānā Fateh Bhoopal**
**Sanskrit College, Udaipur.**

Published by
**Pt. Dhanlal Sharma,**
**Durga Shanker Nagar**
**Sanskrit Granthagar. Chandpol, Udaipur, Mewar.**

Printer:—K. B. Pawagi,
Hitchintak Press, Ramghat, Benares City.

First Edition 1000 | **1934.** | Price Re. 1/-

श्री मम्मटाचार्य्य विरचितः

# काव्य-प्रकाशः ।

अत्रत्य

श्रीमहाराणा फतहभूपाल संस्कृत महाविद्यालयस्य

साहित्याध्यापकेन

व्यासोपाह्व पण्डित गोवर्धनशर्मतनुजनुषा

**गिरिधरलालेन**

साहित्यशास्त्रिणा

पद्यमयीं मूर्तिमायादितः टिप्पणीभिश्च संयोजितः

स च

उदयपुरस्थ संस्कृतग्रन्थागाराध्यक्षेण

द्विवेदी नाथूरामात्मज पं० धनलालशर्मणा

पं० सवाईलाल तनूजेन दुर्गाशंकर नागरेण च

काशीस्थ रामघट्टे हितचिन्तक यन्त्रालये

कृ० व० पावगी इत्येतैः प्रबन्धेन मुद्रापयित्वा प्रकाशितः ।



प्रथमं संस्करणम् १००० } विक्रमाब्दाः १९९० { मूल्यम् १)

# विषयानुक्रमणिका ।

# अथ भूमिका

श्रीमान् राजानकोपाधिको मम्मटभट्टसुधीः साहित्यशास्त्र-निबन्धनिर्मातृषु मूर्धन्य इति न तिरोहितं सुरभारतीसाहिती-रसिकानां विपश्चिदपश्चिमानाम्। तेन प्रणीतः स्वप्रज्ञाप्रतिबि-म्बायमानः काव्यप्रकाशाख्य आकरग्रन्थ आकाशे तारकानिकरं प्रभाकर इवालङ्कारनयप्रतिपादकग्रन्थान्तरनिवहं स्वीयप्रतिभा-प्रकर्षेण नितान्तमधरीकरोति। नेदमस्माकं कपोलकल्पितमेव निराधारं विधानम्। अपि तु ग्रन्थराजमिममधिकृत्य विराज-मानाः सप्ततिसङ्ख्याधिकाष्टीकाग्रन्था एवात्रेदं प्रमाणीकर्तु-मलम्। येषु टीकाकृत्सु जयरामन्यायपञ्चानन-जगदीशतर्का-लङ्कार-गदाधर भट्टाचार्य प्रभृति नैयायिकप्रकाण्डाः नागेश-भट्टप्रभृति वैयाकरणधुरन्धराः कमलाकरप्रभृति मीमांसक-धुरीणाः बलदेवविद्याभूषणप्रभृति वैष्णवाग्रण्यः गोकुलनाथ-प्रभृति-दार्शनिक-तान्त्रिकरत्नानि वाचस्पति-वैद्यनाथसदृश-धर्माचार्याः राजानकरुय्यक-विश्वनाथकविराजप्रभृतिसाहित्य-केसरिणः प्रामुख्येन परिगण्यन्ते। ईदृगयमखिलशास्त्रपारङ्ग-मानां विदुषां मनीषानिकषायमाणो ग्रन्थराजोऽधुना मेदपाट-मण्डलान्तर्गतोदयपुरराजधान्यां महाराणाविद्यालये संस्कृता-ध्यापकपदमलङ्कुर्वतां श्रीमतां पण्डितवर्यगिरिधरलालशर्मणां कविकुलललामभूतानां चेतश्चिरं रञ्जयितुं तेषां स्वान्ते कौतु-कञ्च जनयितुं प्राभवदित्यत्र किं चित्रम्।

धीमताऽनेन गाम्भीर्ये समुद्रायमाणस्य ग्रन्थस्यास्य मन्थनं विधाय वृत्तराजमनुष्टुभमवलम्ब्य प्रकाशग्रन्थस्थवृत्तिगतगद्य-भागं पद्ये विपरिणमय्य पूर्वमेव पद्यभूतमूलग्रन्थस्थितकारि-कोदाहरणभागं यथापूर्वं संरचय्य श्रवणसुखदं सुपठनक्षमं पद्य-

मयमेवामूलमुपन्यस्य ग्रन्थमिमं विदधानस्य श्रीमम्मटभट्टस्य पूर्वापरभाविनामालङ्कारिकप्रवराणां ग्रन्थप्रतिपाद्यसिद्धान्तानां तुलनात्मक-विवेचनक्षमया टीकया निजनिर्मितया संयोज्य लङ्कारनये पदमर्पितानामर्पिपयिषूणाञ्च सहृदयावतां कृते कुतु कावलोकनार्थं ततश्च हेलयैव सादरं कण्ठे स्थिरीकरणार्थ मधुना संमुद्य प्राकाश्यं प्रापिताऽपूर्वेयं कृतिर्विचक्षणाग्रेसराण. चेतश्चमत्कृतिं जनयितु- कामं क्षमेत्यत्र दृढं विश्वसिमः। मूल ग्रन्थस्यावलोकनं सम्यक् कृतपूर्वाणां विदुषां तत्सिद्धान्तान् स्वहृदि समासतः पद्यरूपेण संस्थापयितुमतीवोपकारी नूतन ग्रन्थोऽयमिति नः प्रतिभाति।

प्रस्तावक्रमेणैवात्र ग्रन्थराजस्यास्यैतिहासिकी कापि समालोचना तज्जिज्ञासूनामध्येष्यमाणानां छात्रवृन्दानां कुतू· हलशमनार्थं सङ्क्षेपतः समुपन्यस्यते। ग्रन्थस्यास्य प्रणेता राजानकपदलाञ्छनः श्रीमान् मम्मटभट्टः काश्मीरानलञ्चकार स्वनिवासेनेत्यत्र न वैमत्यं विदुषाम्। भीमसेनदीक्षितनिर्मित-सुधासागराख्यया ग्रन्थस्यास्य टीकयेदमपि विदितं नः 'अस्य पिता जैयटनामधेयः। व्याकरण महाभाष्यप्रदीपकृत्कैय्यटस्तथा वेदभाष्यकृदुव्वटश्चास्यैव द्वौ कनीयांसौ भ्रातरावास्ताम्। स स्वभ्रातृभ्यां सह वाराणस्यामध्ययनाध्यापनमकरोदिति, तथा च भमिसेनः—

श्रीमान् कैयट औवटो द्यवरजो यच्छात्रतामागतो।
भाष्याब्धिं निगमं यथाक्रममनुव्याख्याय सिद्धिं गतः॥

इति स्वटीकायाः प्रस्तावश्लोकेषु कथयति। अत्र कैयटो-पाध्यायो वैयाकरणः सन् न केनाप्यधुना मम्मटभ्रातृत्वे विसंवादितः। उव्वटविषयेयमुक्तिर्भीमसेनस्योव्वटवचनवि-प्रतिषेधिनी। उव्वटभट्टेन स्वीयवेदभाष्ये ऋक्प्राति-शाख्यभाष्ये च—

आनन्दपुरवास्तव्यवज्रटाख्यस्य सूनुना।
मन्त्रभाष्यमिदं क्लृप्तं भोजे पृथ्वीं प्रशासति ॥ इति ॥
अनेनोव्वटपिता वज्रटनामा बभूव न तु जैयटः।

सर्वशास्त्रविशारदोऽपि मम्मटाचार्योयं प्रधानतयाद्य वैयाकरणाग्रणीरेव बभूव यद्दृढीकरणं काव्यप्रकाशस्थितनैकविधप्रमाणपरम्परया सुशकम्। न केवलं भीमसेनेनैव किन्तु तत्पूर्वैरपि टीकाकृद्भिर्देवनाथतर्कपञ्चाननप्रभृतिभिरयं मम्मटभट्टो वाग्देव्या अवतारत्वेन वर्णितः।

श्लोकेनानेन मम्मटस्य भोजराजसमकालिकत्वमपि ज्ञापितं भवति। अयं धारेश्वरो भोजराजः खृष्टाब्दीय १०१८-१०५५ वर्षपर्यन्तं महीं शशासेति शिलालेखस्थितानेकप्रमाणोपन्यासद्वाराधुनिकैरैतिहासिकैर्निश्चितप्रचम्। काव्यप्रकाशेऽपि मम्मटभट्टेनैवोदात्तालङ्कारोदाहरणावसरे 'यद्विद्वद्भवनेषु भोजनृपतेस्तत्यागलीलायितम्' इति। भोजनृपतेर्वर्णनं कृत्वा तत्समकालिकत्वं प्रकटीकृतम्॥

यदि भोजनृपतेः समकालिकत्वमस्य मम्मटभट्टस्य न स्वीक्रियते तर्हि तस्य ततोऽर्वाचीनत्वन्त्ववश्यमेवाङ्गीकरणीयम्। एवमयं काव्यप्रकाशस्य निर्माता खृष्टाब्दीयैकादशशतकस्योत्तरार्द्धात् ( ई० १०५० ) प्राचीनो न। एकादशशतकस्यारम्भे विद्यमानश्रीमदभिनवगुप्तपादानां ( ई० ९९०-१०१५ ) नामतो निर्देशं रसनिरूपणावसरे विधाय तस्यैव शतकस्य पूर्वार्धे जनिमुपेयुषो व्यक्तिविवेककारस्य राजानकश्रीमहिमभट्टस्य व्यञ्जनाव्यापारमनुभावेऽन्तर्विभावयिषुः सोपपत्तिकं खण्डनं कृतवतो मम्मटवर्यस्य समयः सुतरां तच्छतकस्य पूर्वार्धे नेति स्पष्टतरमेव प्रतिभाति। खृष्टाब्दीयद्वादशशतकस्य पूर्वार्धे ( ई० ११४० ) वर्तमानराजानकरुय्यकवर्येण काव्यप्रकाशस्य टीका सङ्केतनामिका विरचितेति तत्कृतग्रन्थसूचीतो

ज्ञायते। तथा च द्वादशशतकस्योत्तरार्द्धारम्भे ( ई० ११६०) गुर्जरदेशस्थमाणिक्यचन्द्रसूरिविरचिता सङ्केताख्या टीकाऽधुना संमुद्य प्रकाशितोपलभ्यतेऽत एतत्कालादर्द्धशतकपूर्वमेव काव्यप्रकाशस्य पठनपाठनप्रणाली भारतवर्षस्यार्यावर्तभागे प्रचलिताऽऽसीदित्यनुमेयम्। एवं मम्मटभट्टेनायं काव्यप्रकाश ग्रन्थः एकादशशतकस्योत्तरार्द्धभागे ( ई० १०५०-११०० ) कदाचिद्विनिर्मित इति जिज्ञासुभिः समभ्युपेयम्।

अलङ्कारनये काव्यप्रकाशस्य तदेव स्थानं यद् व्याकरणे महाभाष्यस्य वेदान्ते वा शारीरकशाङ्करभाष्यस्य दृश्यते। अतोऽस्य नाम आकर इति सूपपन्नम् अस्यापि ग्रन्थस्यालङ्कारग्रन्थान्तराणामिव त्रय एवांशाः कारिकावृत्तिरुदाहरणं चेति। तत्र द्वाचत्वारिंशदधिकैकशतसङ्ख्यकाः कारिकाः सूत्रवद्गाढसन्दर्भाः ताः सर्वा अत्र ग्रन्थे यथानुपूर्वीक नियद्धाः। वृत्तिरपि गद्यात्मिका मिताक्षरा सारगर्भा दुरूहा अत एव परिणायितुं दुःशकाऽपि विदुषास्याभिनवग्रन्थस्य प्रणेत्रा सा मूलग्रन्थस्य वृत्तिः सकौशलमनुएववृत्तौ सङ्क्रामिताऽत्र विद्वद्भिरेव निरीक्षणीया। उदाहरणान्यपि द्विसहस्रोत्तरपदशतसङ्ख्यकश्लोकात्मकानि पूर्ववर्तिनां महाकवीनां कृतिभ्य उद्धृत्य वृत्तानि ग्रन्थेऽस्मिंस्तत्रैवोल्लिखितानि द्रष्टव्यानि। ग्रन्थोऽयं मम्मटभट्टवर्येण कथमपि समाप्तिं न नीतः परिकरालङ्कारावधिरेव विरचितः। शेषस्तु तच्छिष्यभूतेनालकसूरिणाऽल्लटाचार्येण वा समाप्तिं नीत इति ग्रन्थस्यास्यान्तिमश्लोकसन्दर्भेण ज्ञायते। तत्र माणिक्यचन्द्रसूरिः 'ग्रन्थोऽयमन्येनारब्धोऽपरेण समर्थित इति द्विखण्डोऽपि...' इत्यादि कथयन्निममेवार्थं स्पष्टतया प्रकटीकरोति। अपरेणापि कथितम्—

कृतः श्रीमम्मटाचार्यवर्यैः परिकरावधिः।
प्रबन्धः पूरितः शेषो विधायाल्लटसूरिणा ॥ इति ॥

इत्थमेव सोमेश्वर–जयन्तभट्ट–कमलाकर–सरस्वतीतीर्थ-प्रभृतिभिरप्युच्यते। कुत्रचित् 'कृती राजानकमम्मटालकयोः' इति द्विवचननामनिर्देशोऽपि सुलभः।

ग्रन्थस्यास्यांशत्रितये तृतीयांश उदाहरणात्मको मम्मट-कृतिर्नेत्युक्तपूर्वम्। शेषांशद्वयविषयेऽपि तदेककर्तृकं द्विकर्तृकं वेत्यत्र टीकाकृतां वैमत्यं दृश्यते। प्रायेण वङ्गीयाः कारिका-कर्तृत्वं भरतमुनौ समारोपयन्ति। तदितरे न तमन्ते। भिन्न-कर्तृकत्वस्य प्रतिपादयितारस्तु कथयन्ति 'कतिपयकारिकाः प्रकाशग्रन्थगता भरतप्रणीतनाट्यशास्त्रेऽधुनोपलभ्यन्ते। तथा च ग्रन्थस्यास्य प्रथमकारिकावृत्त्युपक्रमावसरे 'ग्रन्थकृत् परा-मृशति' इति प्रथमपुरुषपूर्वकनिर्देशः कारिकाकर्तुर्वृत्तिकृद्भि-न्नत्वमुपपादयति। दशमोल्लासे च रूपकलक्षणे 'समस्तवस्तु-विषयं श्रौता आरोपिता यदा' इति कारिकायां बहुवचनग्रहणं तथा चास्य वृत्तौ 'बहुवचनमविवक्षितम्' इति पृथगुपपादनं कर्तृपृथक्त्वबोधकमेवेति।

इतरेऽत्रेत्थं समादधते–सार्द्धशतकारिकासु द्वे तिस्रो वा कारिका भरतमुनिप्रणीता नाट्यशास्त्रे संदृश्यन्ते। तास्तत एव बुद्धिपूर्वं मम्मटाचार्यैरुद्धृता इत्यवसेयाः। कुतः। तैरेव ध्वनानन्दवर्धनाचार्यग्रन्थेभ्योऽपीदृगेव कतिपयश्लोका उद्धृत्य लिखिता अपरत्र सुधीभिर्द्रष्टव्याः इति। प्रथमपुरुषनिर्देशस्तु महापुरुषाणामात्मश्लाघादोषदूरीकरणार्थमेव। उक्तं मेधा-तिथिना स्वीयमनुस्मृतिभाष्ये 'प्रायेण ग्रन्थकाराः स्वमतं परापदेशेन ब्रुवते' इति। विश्वरूपेणापि याज्ञवल्क्यस्मृतिटीका-यामुक्तम्–'किन्तु भगवतैव परोक्षीकृत्यात्मा निर्दिश्यते स्वप्रशं-सानिषेधात्' इति। समस्तवस्तुविषयरूपके तत्रारोप्यमाणानां बाहुल्याद्बहुवचनमुक्तम्। वृत्तावपि प्रथमं तद् बहुत्वमवल-म्ब्यैव स्पष्टीक्रियते। यत्र तु बहुवचनमविवक्षितमित्युक्तिस्तत्रा–

रोप्यमाणानां द्वित्वग्रहणाद् द्वित्वेऽपि समस्तवस्तुविषयरूपकस्य प्राप्तिप्रतिबोधनार्थम् । प्रत्युत कारिकावृत्त्युभयात्मकस्य मम्मटभट्टैककर्तृकत्वे प्रमाणानि स्वतन्त्रान्युपन्यस्यन्ते । तदित्थम्—

( क ) यदि वृत्तेर्भिन्नकर्तृकत्वमपेक्ष्यते तर्हि तत्र पृथङ्मङ्गलाचरणेन भाव्यं यन्न दृश्यते ।

( ख ) यदि कारिकाकर्तृकत्वं भरतमुनेरिष्टं तर्हि 'तदुक्तं भरतेन' इति वृत्तिकारोक्तिर्न सङ्गच्छेत ।

( ग ) दशमोल्लासे मालारूपकाकारिका त्वेवम् 'साङ्गमेतन्निरङ्गन्तु शुद्धं माला तु पूर्ववत्' इत्यत्र 'पूर्ववत्' पदेन यन्मालारूपकं निर्दिष्टं तद्वृत्तिगतमालोपमालक्षणं द्योतयति स्वयं कारिकागतं सत् । यदेकमेव प्रमाणमुभयोः कारिकावृत्त्योरेककर्तृकत्वप्रतिपादनेऽलम् । इत्यलं बहुना ।

इत्थं परिकरविधिः कारिकावृत्तिग्रन्थो मम्मटभट्टकर्तृक एवेति सिध्यति ।

अन्ते च पं० गिरिधरलालशास्त्रिभिः सुसम्पादितोऽयं ग्रन्थः स्वान्त सतां सन्तोषयितुं सुतरां प्रभवेदित्याशास्य तदीयेष्टसिद्धिदोऽयं ग्रन्थो सर्वविद्वद्वृन्दहृदयारविन्दमकरन्दमिलिन्दायमानः सर्वान्तर्यामिणं भगवन्तं वासुदेवं श्रीकृष्णं प्रीणातु इत्येवाशासानो विरमाम्यस्माद्भूमिकाविरचनसाहसादिति शम् ।

विद्वद्विधेयः
जोश्युपाह्व श्री जयरामतनूज.
सीताराम शर्मा
एम्. ए. साहित्यशास्त्राचार्य
काशीविश्वविद्यालयीयप्राच्यविद्याविभागे
साहित्यदर्शनेतिहासाध्यापकः ।

काशी
मिति चैत्र शु. ८
सं० १९९०

## वक्तव्यम् ।

कथमत्र विषये मया साहसिक्यमाचरितमित्यधिकृत्य किञ्चिदुच्यते । यथा—भ्रमन् विपण्यामेकदा गोर्जररूपिणं प्रकाशन्तमेनमवलोक्य 'कथमयमिदानीन्तनभारतीयभारत्यां (हिन्दीभाषायां) जायेत' इति भूयो भूयो व्यचारयम् । ततश्च कतिचनमासाभ्यन्तरमेवेनं समुदपातयम् । वृद्धकायः समाप्तप्रायपञ्चमोल्लासवर्ष एष बाल इवोपनीतः सद्यः काशीं जगाम । मासषट्कञ्च नागरीसङ्गतस्तत्र कालं निनाय । पुनश्चार्धचन्द्रालङ्कृतोऽयं वराकः परं कार्श्यमुपगतः । शोचनीयामेतामवस्थामापन्नश्चासकृच्छ्रब्दायितः श्यामसुन्दरः सुगभीरनादमवोचत् त्समथे यावदस्य चिकित्सां विदधीम तावत्सुखं स्वपितु पौलस्त्यपुत्रः कुम्भकर्ण इव । किन्तु कृशः कायेन मनसोन्नतोऽयमनुपमेन साहसेन पुरातनभारतीयभारतीवपुराश्रित्या (संस्कृत पद्यरूपेण) दिक्कविप्रदर्शितपथादुपतन् शोभालाल भीमशङ्करदुर्गाशङ्कर प्रभृतिभिः सब्रह्मचारिभिः सह भूयोऽपि काशीं प्रस्थितः । अधुना च सहचरसहायेन विश्वनिवासं कृष्णपादपङ्कजतलं शान्तिमयमाशिश्रियत् । बालैः पुनः पुनः प्रशस्यमानः सोऽयं सम्प्रति लोकलोचन गोचरीभूतः । भीमशङ्करदुर्गाशङ्करयोः सहायमन्तरा न कथमप्यात्मानं सहस्रधासमदर्शयिष्यत् ।

कोऽनुम्मतः खलु स्वकीयं जनं परैरालुच्यमानकेशकलापं स्वलोचनेनालोकयेदिति तत्र भवतां करुणार्द्रचेतसां विदुषा-

रोप्यमाणानां द्वित्वग्रहणाद् द्वित्वेऽपि समस्तवस्तुविषयरूपकस्य प्राप्तिप्रतिबोधनार्थम् । प्रत्युत कारिकावृत्त्युभयात्मकस्य मम्मटभट्टैककर्तृकत्वे प्रमाणानि स्वतन्त्राण्युपन्यस्यन्ते । तदित्थम्—

( क ) यदि वृत्तेर्भिन्नकर्तृकत्वमपेक्ष्यते तर्हि तत्र पृथङ्मङ्गलाचरणेन भाव्यं यन्न दृश्यते ।

( ख ) यदि कारिकाकर्तृकत्वं भरतमुनेरिष्टं तर्हि 'तदुक्तं भरतेन' इति वृत्तिकारोक्तिर्न सङ्गच्छेत ।

( ग ) दशमोल्लासे मालारूपकाकारिका त्वेवम् ' साङ्गमेतन्निरङ्गन्तु शुद्धं माला तु पूर्ववत् ' इत्यत्र 'पूर्ववत्' पदेन यन्मालारूपकं निर्दिष्टं तद्वृत्तिगतमालोपमालक्षणं द्योतयति स्वयं कारिकागतं सत् । यदेकमेव प्रमाणमुभयोः कारिकावृत्त्योरेककर्तृकत्वप्रतिपादनेऽलम् । इत्यलं बहुना ।

इत्थं परिकरविधिः कारिकावृत्तिग्रन्थो मम्मटभट्टकर्तृक एवेति सिध्यति ।

अन्ते च पं० गिरिधरलालशास्त्रिभिः सुसम्पादितोऽयं ग्रन्थः स्वान्तं सतां सन्तोषयितुं सुतरां प्रभवेदित्याशास्य तदीयैरस्खलितोऽयं ग्रन्थो सर्वविद्वद्वृन्दहृदयारविन्दमकरन्दमिलिन्दायमानः सर्वान्तर्यामिणं भगवन्तं वासुदेवं श्रीकृष्णं प्रीणातु इत्येवाशासानो विरमाम्यस्माद्भूमिकाविरचनसाहसादिति शम्।

विद्वद्विधेयः
जोश्युपाह्व श्री जयरामतनूजः
सीताराम शर्मा
एम्. ए. साहित्यशास्त्राचार्यः,
काशीविश्वविद्यालयीयप्राच्यविद्याविभागे
साहित्यदर्शनेतिहासाध्यापकः ।

काशी
मिति चैत्र शु. ८
सं० १९९०

# वक्तव्यम् ।

कथमत्र विषये मया साहसिक्यमाचरितमित्यधिकृत्य किञ्चिदुच्यते । यथा—भ्रमन् विपण्यामेकदा गोजेरुपिणं प्रकाशन्तमेनमवलोक्य ' कथमयमिदानीन्तनभारतीयभारत्यां ( हिन्दीभाषायां ) जायेत' इति भूयो भूयो व्यचारयम् । ततश्च कतिचनमासाभ्यन्तरमेवैनं समुदपातयम् । बृहत्कायः समाम्नायपञ्चमोल्लासवर्ष एव बाल इवोपनीतः सद्यः काशीं जगाम । मासषट्कञ्च नागरीसङ्गतस्तत्र कालं निनाय । पुनश्चार्धचन्द्रालङ्कृतोऽयं वराकः परं कार्श्यमुपगतः । शोचनीयामेतामवस्थामापन्नश्चासकृच्छङ्करायितः श्यामसुन्दरः सुगम्भीरनादमवोचत् समये यावदस्य चिकित्सां विदधीम तावत्सुखं स्वपितु पौलस्त्यपुत्रः कुम्भकर्ण इव । किन्तु कृशः कायेन मनसोन्नतोऽयमनुपमेन साहसेन पुरातनभारतीयभारतीवपुराश्रित्य ( संस्कृत पद्यरूपेण ) दिकविप्रदर्शितपथादुपतन् शोभालाल भीमशङ्कर-दुर्गाशङ्कर प्रभृतिभिः सब्रह्मचारिभिः सह भूयोऽपि काशीं प्रस्थितः । अधुना च सहचरसहायेन विश्वनिवासं कृष्णपाद-पङ्कजतलं शान्तिमयमाशिश्रियत् । वालैः पुनः पुनः प्रशस्यमानः सोऽयं सम्प्रति लोकलोचन गोचरीभूतः । भीमशङ्करदुर्गाशङ्करयोः सहायमन्तरा न कथमप्यात्मानं सहस्रधा समदर्शयिष्यत् ।

कोऽनुम्मतः खलु स्वकीयं जनं परैरालुक्यमानकेसरकलापं निकुञ्ज-स्वलोचनेनालोकयेदिति तत्र भवतां कल्याणसर्वस्वां

माश्रये समर्पयामि । तदेतस्य रक्षणे त एव प्रभवः शरणागतरक्षणग्रहीतवताः सुधियः ।

प्रथमभागस्तु प्रस्तुत एव । द्वितीयोऽपि शीघ्रोऽविलम्ब प्रकाशमेष्यति । द्वितीयावृत्तौ चैतस्य संस्कृत-हिन्दीभाषामय माङ्गलभाषामयञ्च प्रकाशनं सम्भाव्यते ।

भूमिर्ज्योतिः सलिलमरुदाकाशमात्राभिरेव,
संसारश्चेत्प्रवचनपटुता ब्रह्मणा निर्मितोऽस्ति ।
नैवाश्चर्यं विबुधरचनान्यंशतोऽप्याददानो,
नूनं भूमेर्जलमिव सुखं वर्षतीह प्रकाशः ॥

सूचना—( १ ) ५४ पृष्ठे ७ पंक्तौ उपाध्येनोत्तमपदेन हिन्दी रसगङ्गाधरलेखकाः सुहृद्वर्याः साहित्याचार्याः पुरुषोत्तमशर्माणश्चतुर्वेदाः स्मर्यन्ते ।

भावज्ञानं विनात्र न रसानुभवः स्फुटम् ।
स्वलङ्कामयमानेन स्वीकृता हनुमद्गतिः ॥

महाशिवरात्रि·
विक्रमाब्दाः १९९०
उदयपुरम्

विद्वज्जनचरणसेवक.—
गिरिधरलालव्यासः
( साहित्यशास्त्री )

॥ श्रीहरिः ॥

गोवर्द्धनधरं धीरं गोवर्द्धनपरायणम् ।
गोवर्द्धनाय संस्तौति गोवर्द्धनसुतः सुधीः ॥
सशोभौ रामचरणौ नत्वा भक्त्यार्द्रचेतसा ।
समुज्वलं प्रकाशं हि मलिनीकर्तुमुद्यतः ॥
मम्मटार्कप्रकाशः क काहं कौशिकसत्तमः ।
करप्रसारं गृह्णामि पदार्थान्विबुधार्पितान् ॥
गद्ये विश्रृङ्खला वृत्तिः पद्यबन्धे नियोजिता ।
तच्छब्दानेव संगृह्य पादपूर्तौ विशेषिता ॥
किञ्चान्येषां मतमपि यत्रतत्र समुद्धृतम् ।
नूनं टिप्पणरूपेण शब्दतो भावतोऽपि वा ॥
तत्रैव तेषां सङ्केतो नामतो ग्रन्थतः कृतः ।
पूर्णसन्तोषहेतुस्तु मूलग्रन्थावलोकनम् ॥
गद्यस्यापेक्षया नूनं पद्यबन्धो विशिष्यते ।
सुस्मरः सुस्थिरो नित्यं बालानां सुकरो यतः ॥
इत्याकलयता चित्ते धार्ष्ट्यमेतन्मया कृतम् ।
क्षमिष्यति स सर्वज्ञः कृष्णाख्यः पुरुषः परः ॥
नामूलं लिख्यते किञ्चित्प्रमाणरहितं वचः ।
पाण्डित्यं ख्यातुकामेन नानपेक्षितमुच्यते ॥

# काव्य-प्रकाशः

## प्रथम उल्लासः ।

वृ०— ग्रन्थारम्भे हि विघ्नानां विघातायैव सर्वदा ।
इष्टदेवं ग्रन्थकारः परामृशति पूर्वतः ॥

का०—नियतिकृतनियमरहितां,
ह्लादैकमयीमनन्यपरतन्त्राम् ।
नवरसरुचिरां निर्मिति,-
मादधती भारती कवेर्जयति ॥

वृ०— नियता नियतेः शक्त्या सुखदुःखमयी तथा ।
परमाण्वाद्युपादानकर्मादिसहकारिणोः ॥
द्वयोः कारणयोरस्ति परतन्त्रा सदैव च ।
षड्रसापि न हृद्यैव ब्रह्मणो निर्मितिर्मता ॥
विलक्षणैव विज्ञेया कविवाङ् निर्मितिस्ततः ।
जयत्यतो भगवती सदैव कविभारती ॥
आक्षिप्यते नमस्कारो जयत्यर्थेन कोविदैः ।
अनेन लभ्यते चैतत्प्रणतोऽस्मीति साम्प्रति ॥
काव्यमित्यभिधेयं यत्सप्रयोजनमेव तत् ।

का०—काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे।

वृ०— यशसे कालिदासादेर्धावकादेर्धनाय च।
ज्ञानाय व्यवहारस्य तथा लोकनृपादिषु॥

क्षमं काव्यं मयूरादेरनर्थानां च वारणे।
प्रयोजनानां सर्वेषां मौलिभूतमनुत्तमम्॥

अत्र काव्यश्रुतेर्नूनं समनन्तरमेव च।
रसास्वादसमुद्भूत ब्रह्मानन्दसहोदरम्॥

वेद्यान्तरस्पर्शशून्यमानन्द वितरत्यदः।
रसाङ्गभूतव्यापारप्रवणत्वेन हेतुना॥

द्वयोः शब्दार्थयोश्चैव गुणभावाद्विलक्षणम्।
लोकोत्तरचमत्कारिवर्णनानिपुणं च यत्॥

कविकर्म भवेत्काव्यमालङ्कारिकसम्मतम्।
उपदेशः प्रभुसुहृत्कान्तासम्मितरीतितः॥

वेदेतिहासकाव्यानां कथितस्त्रिविधस्ततः।
प्रभुसम्मित आद्यः स्याद्वैदिको विधिलक्षणः॥

शब्दप्रधान एवासौ फल एवातिसौख्यदः।
सुहृत्सम्मित एव स्यादितिहासादिजः पुनः॥

सुहृदुक्तौ भवेत्सौख्यं फलं नोचेद्द्वयं न हि।
कान्तारीत्योपदेशश्च मतः काव्यादिसम्भवः॥

टि०—सुन्दरी स्वेशहृदयं वशीकृत्य यथा गुणैः ।
लौकिकं वैदिकं लाभं कूजतीव ससाधनम् ॥
श्रोतुर्मनो वशीकृत्य हितं वक्ति सहेतुकम् ।

**वृ०— रामादिवद्वर्तितव्यं न क्वचिद्रावणादिवत् ॥**
**इत्याद्याकारकं सर्वमुपदेशं यथातथम् ।**
**कवेः सहृदयस्यापि काव्यमेव करोति यत् ॥**
**अतः प्रयतितव्यं हि काव्यशिक्षाप्तये बुधैः ।**

टि०—दृष्टमाग्निपुराणेऽपि व्यासस्य वचनं यथा ॥
"धर्मार्थकाममोक्षेषु वैलक्षण्यं कलासु च ।
करोति कीर्तिं प्रीतिञ्च साधुकाव्यनिषेवणम् ॥
कीर्तिमेकां स्वीकरोति यथा भामहभारती ।
"उपेयुषामपि दिवं सन्निबन्धविधायिनाम् ॥
आस्त एव निरातङ्कं कान्तं काव्यमयं वपुः ।
रुणद्धि रोदसी चास्य यावत्कीर्तिरनश्वरी ॥
तावत्किलायमध्यास्ते सुकृती वैबुधं पदम् ।
अतोऽभिवाञ्छता कीर्तिं स्थेयसीमाभुवः स्थितेः ॥
यत्नोविदितवेद्येन विधेयः काव्यलक्षणः ।",
"काव्यं कल्पान्तरस्थायि कीर्तिदं" वेद दण्ड्यपि ॥
विवेद रुद्रटार्योऽपि काव्यं कीर्तिफलं यथा ।
"तत्कारितसुरसदनप्रभृतिनि नष्टे तथा हि कालेन ॥
न भवेन्नामापि ततो यदि न स्युः सुकवयो राज्ञाम् ।

का०—काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ।

सू०— यशसे कालिदासादेर्धावकादेर्धनाय च ।
ज्ञानाय व्यवहारस्य तथा लोकनृपादिषु ॥
क्षमं काव्यं मयूरादेरनर्थानां च वारणे ।
प्रयोजनानां सर्वेषां मौलिभूतमनुत्तमम् ॥
अत्र काव्यश्रुतेर्नूनं समनन्तरमेव च ।
रसास्वादसमुद्भूतं ब्रह्मानन्दसहोदरम् ॥
वेद्यान्तरस्पर्शशून्यमानन्दं वितरत्यदः ।
रसाङ्गभूतव्यापारप्रवणत्वेन हेतुना ॥
द्वयोः शब्दार्थयोश्चैव गुणभावाद्विलक्षणम् ।
लोकोत्तरचमत्कारिवर्णनानिपुणं च यत् ॥
कविकर्म भवेत्काव्यमालङ्कारिकसम्मतम् ।
उपदेशः प्रभुसुहृत्कान्तासम्मितरीतितः ॥
वेदेतिहासकाव्यानां कथितस्त्रिविधस्ततः ।
प्रभुसम्मित आद्यः स्याद्वैदिको विधिलक्षणः ॥
शब्दप्रधान एवासौ फल एवातिसौख्यदः ।
सुहृत्सम्मित एव स्यादितिहासादिजः पुनः ॥
सुहृदुक्तौ भवेत्सौख्यं फलं नोचेद्द्वयं न हि ।
कान्तारीत्योपदेशश्च मतः काव्यादिसम्भवः ॥

टि०—सुन्दरी स्वेशहृदयं वशीकृत्य यथा गुणैः ।
लौकिकं वैदिकं लाभं कूजतीव ससाधनम् ॥
श्रोतुर्मनो वशीकृत्य हितं वक्ति सहेतुकम् ।

**सू०—रामादिवद्वर्तितव्यं न क्वचिद्रावणादिवत् ॥**
**इत्याद्याकारकं सर्वमुपदेशं यथातथम् ।**
**कवेः सहृदयस्यापि काव्यमेव करोति यत् ॥**
**अतः प्रयतितव्यं हि काव्यशिक्षाप्तये बुधैः ।**

टि०—दृष्टमाग्निपुराणेऽपि व्यासस्य वचनं यथा ॥
"धर्मार्थकाममोक्षेषु वैलक्षण्यं कलासु च ।
करोति कीर्तिं प्रीतिश्च साधुकाव्यनिषेवणम् ॥
कीर्तिमेकां स्वीकरोति यथा भामहभारती ।
"उपेयुषामपि दिवं सन्निबन्धविधायिनाम् ॥
आस्त एव निरातङ्कं कान्तं काव्यमयं वपुः ।
रुणद्धि रोदसी चास्य यावत्कीर्तिरनश्वरी ॥
तावत्किलायमध्यास्ते सुकृती वैबुधं पदम् ।
अतोऽभिवाञ्छता कीर्तिं स्थेयसीमाभुवः स्थितेः ॥
यत्नोविदितवेद्येन विधेयः काव्यलक्षणः ।"
"काव्यं कल्पान्तरस्थायि कीर्तिदं" वेद दण्ड्यपि ॥
विवेद रुद्रटार्योऽपि काव्यं कीर्तिफलं यथा ।
"तत्कारितसुरसदनप्रभृतिनि नष्टे तथा हि कालेन ॥
न भवेन्नामापि ततो यदि न स्युः सुकवयो राज्ञाम् ।

ज्वलदुज्ज्वलवाक्प्रसरः सरसं कुर्वन्महाकविः काव्यम्।
स्फुटमाकल्पमनल्पं प्रतनोति यशः परस्यापि॥
अर्थमनर्थोपशमं शमसममथवा यदेवास्य।
विरचितरुचिरसुरस्तुतिरखिलं लभते तदेव कविः॥
नुत्वा तथाहि दुर्गां केचित्तीर्णा दुरुत्तरां विपदम्।
अपरे रोगविमुक्तिवरमन्ये लेभिरेऽभिमतम्॥
आसाद्यते स्म सद्यः स्तुतिभिर्येभ्योऽभिवाञ्छितं कविभिः।
अद्यापि त एव सुरा यदि नाम नराधिपा अन्ये॥
स्फारस्फुरदुरुमहिमा हिमधवलं सकललोककमनीयम्।
कल्पान्तस्थायि यशः प्राप्नोति महाकविः काव्यात्॥
अमरसदनादिभ्यो भूता कीर्तिरनश्वरी।
भवति यदसौ संवृद्धापि प्रणश्यति तत्क्षये।
तदलमलंकर्तुं काव्यं यतेत समाहितः।
जगति सकले व्यासादीनां विलोक्य परं यशः॥"
उक्तं तत्रैव टीकायां स्फुटं हि नमिसाधुना।
"यतः क्षणध्वंसिनि सम्भवेऽस्मिन्,
काव्यादृतेऽन्यत्क्षयमेति सर्वम्।
अतो महद्भिर्यशसे स्थिराय,
प्रवर्तितः काव्यकथाप्रसङ्गः॥"
श्रीरुद्रभट्टरचिते तिलकेऽस्ति नूनं,
"सद्वागलङ्कृतिगुणं सरसं सुवृत्तम्।

आसेदुपामपि दिवं कविपुङ्गवानां,
तिष्ठत्यखण्डमिह काव्यमयं शरीरम् ॥"
काव्यालङ्कारसूत्रे च वामनो वा मनो दधे ।
"प्रतिष्ठां काव्यबन्धस्य यशसः सरणिं विदुः
अकीर्तिवर्तनीं त्वेवं कुकवित्वविडम्बनाम् ॥
कीर्तिं स्वर्गफलामाहुरासंसारं विपश्चितः ।
अकीर्तिन्तु निरालोकनरकोद्देशदूतिकाम् ॥
तस्मात्कीर्तिमुपादातुमकीर्तिश्च निवर्हितुम् ।
काव्यालङ्कारशास्त्रार्थः प्रसाद्यः कविपुङ्गवैः ॥"
अत्र धारापतिर्भोजः "कीर्तिं प्रीतिश्च विन्दति ।"
कुन्तलस्यात्र विषये विशेषः प्रतिभासते ॥
"धर्मादिसाधनोपायः सुकुमारक्रमोदितः ।
काव्यबन्धोऽभिजातानां हृदयाह्लादकारकः ॥
व्यवहारपरिस्पन्दसौन्दर्यं व्यवहारिभिः ।
सत्काव्याभिगमादेव नूतनौचित्यमाप्यते ॥
चतुर्वर्गफलास्वादमप्यतिक्रम्य तद्विदाम् ।
काव्यामृतरसेनान्तश्चमत्कारो वितन्यते ॥".
वाग्भटः "केवलां कीर्तिं" वक्ति काव्यप्रयोजनम् ।
प्रयोजनं मम्मटवद्धेमचन्द्रोऽपि मन्यते ॥
फलमुक्तञ्च टीकायां परमानन्दनिर्वृतिः ।
"उपशमफलाद्विद्याबीजात्फलं धनमिच्छतो,
भवति विफलो यद्यायासस्तदत्र किमद्भुतम् ।

न नियतफलाः कर्तुर्भावाः फलान्तरमीशते ॥
जनयति खलु व्रीहेर्बीजं न जातु यवाङ्कुरम् ।"
"चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि ।
काव्यादेव" विश्वनाथः कविराजश्च मन्यते ॥
तथा केशवमिश्रोऽपि "श्रुतं सुखविशेषकृत् ।
हिताय सुकविः कुर्या" दित्येवं प्रतिपादयन् ।
उद्धृत्य वृद्धवचनं प्रमाणत्वे न्यवेशयत् ॥
"लाभः पूजाख्यातिर्धर्मः कामश्च मोक्षश्च ।
इष्टानिष्टप्राप्तित्यागौ ज्ञानं फलानि काव्यस्य ॥
श्रोतॄणां द्राक् महानन्दः स स्वास्मिन्नाभिमानिकः ।
तात्कालफलमेतावत्क्रमात्कीर्तिधनादिकम् ॥"
जगन्नाथो मम्मटवद्वक्ति काव्यप्रयोजनम् ॥

सू०— निरूप्यतेऽधुना काव्यकारणं कविवर्णितम् ।

**का०—शक्तिर्निपुणता लोककाव्यशास्त्राद्यवेक्षणात् ।**
**काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे ॥**

सू०— कवित्वबीजरूपोऽसौ संस्कारः शक्तिरुच्यते ।
यां विना प्रसरेन्नैव काव्यमित्येव निश्चयः ॥
कदाचित्प्रसृतं वापि समासु हास्यतां व्रजेत् ।
चराचरस्य लोकस्य वृत्तज्ञानाच्च पूर्णतः ॥
छन्दोव्याकरणग्रन्थाः कोषग्रन्थाः कलाकराः ।
धर्मार्थकाममोक्षाणां ये ग्रन्थाः प्रतिपादकाः ॥

खड्गादिलक्षणग्रन्थाः काव्यग्रन्थास्तथैव च ।
शालिहोत्रादयो ग्रन्थास्तेषामध्ययनात्तथा ॥
इतिहासपुराणानां विमर्शाच्च पुनः पुनः ।
व्युत्पत्तिरिति विज्ञेया सालङ्कारिकसम्मता ॥

कर्तुं जानन्ति ये काव्यं विचारयितुमेव वा ।
तेषामेवोपदेशेन करणे योजने तथा ॥
पौनःपुन्येन प्रवृत्तिरभ्यासः परिकीर्तितः ।
शक्तिर्व्युत्पत्तिरभ्यासश्चैते समुदितास्त्रयः ॥

न तु व्यस्ताः कदाचिद्वै तत्काव्यस्योद्भवे मतः ।
निर्माणे च समुल्लासे हेतुर्वै न तु हेतवः ॥

टि०— अभाणि भामहेनापि काव्यस्य कारणं प्रति ।
"गुरूपदेशादध्येतुं शास्त्रं जडधियोऽप्यलम् ।
काव्यन्तु जायते जातु कस्यचित्प्रतिभावतः ॥"
उक्तञ्च दण्डिनाप्यत्र विषये स्फुटमेव तत् ।
"नैसर्गिकी च प्रतिभा श्रुतञ्च बहुनिर्मलम् ॥

अमन्दश्चाभियोगोऽस्याः कारणं काव्यसम्पदः ।
अत्र कारणमेतेन त्रितयं काव्यकारणम् ॥"
मम्मटस्यात्र विषये वामनो मार्गदर्शकः ।
रुद्रटो हृदयान्तःस्थां गूढां वाचमुपाददे ॥

"मनसि सुसमाधिनि, विस्फुरणमनेकधाभिधेयस्य ।
अक्लिष्टानि पदानि च विभान्ति यस्यामसौ शक्तिः ॥

न नियतफलाः कर्तुर्भावाः फलान्तरमीशते ॥
जनयति खलु व्रीहेर्बीजं न जातु यवाङ्कुरम् ।"
"चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि ।
काव्यादेव" विश्वनाथः कविराजश्च मन्यते ॥
तथा केशवमिश्रोऽपि "श्रुतं सुखविशेषकृत् ।
हिताय सुकविः कुर्या" दित्येवं प्रतिपादयन् ।
उद्धृत्य वृद्धवचनं प्रमाणत्वे न्यवेशयत् ॥
"लाभः पूजाख्यातिर्धर्मः कामश्च मोक्षश्च ।
इष्टानिष्टप्राप्तित्यागौ ज्ञानं फलानि काव्यस्य ॥
श्रोतॄणां द्राङ् महानन्दः स स्वास्मिन्नाभिमानिकः ।
तत्कालफलमेतावत्क्रमात्कीर्तिधनादिकम् ॥ "
जगन्नाथो मम्मटवदूक्ति काव्यप्रयोजनम् ॥

वृ०— निरूप्यतेऽधुना काव्यकारणं कविवर्णितम् ।

**का०—शक्तिर्निपुणता लोककाव्यशास्त्राद्यवेक्षणात् ।**
**काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे ॥**

वृ०— कवित्वबीजरूपोऽसौ संस्कारः शक्तिरुच्यते ।
यां विना प्रसरेन्नैव काव्यमित्येव निश्चयः ॥
कदाचित्प्रसृतं वापि समाप्तु हास्यतां व्रजेत् ।
चराचरस्य लोकस्य वृत्तज्ञानाच्च पूर्णतः ॥
छन्दोव्याकरणग्रन्थाः कोषग्रन्थाः कलाकराः ।
धर्मार्थकाममोक्षाणां ये ग्रन्थाः प्रतिपादकाः ॥

खड्गादिलक्षणग्रन्थाः काव्यग्रन्थास्तथैव च ।
शालिहोत्रादयो ग्रन्थास्तेषामध्ययनात्तथा ॥
इतिहासपुराणानां विमर्शाच्च पुनः पुनः ।
व्युत्पत्तिरिति विज्ञेया सालङ्कारिकसम्मता ॥

कर्तुं जानन्ति ये काव्यं विचारयितुमेव वा ।
तेषामेवोपदेशेन करणे योजने तथा ॥
पौनःपुन्येन प्रवृत्तिरभ्यासः परिकीर्तितः ।
शक्तिर्व्युत्पत्तिरभ्यासश्चैते समुदितास्त्रयः ॥

न तु व्यस्ताः कदाचिद्वै तत्काव्यस्योद्भवे मतः ।
निर्माणे च समुल्लासे हेतुर्वै न तु हेतवः ॥

टि०— अमाणि भामहेनापि काव्यस्य कारणं प्रति ।
"गुरूपदेशादध्येतुं शास्त्रं जडधियोऽप्यलम् ।
काव्यन्तु जायते जातु कस्यचित्प्रातिभावतः ॥"
उक्तश्च दण्डिनाप्यत्र विषये स्फुटमेव तत् ।
"नैसर्गिकी च प्रतिभा श्रुतञ्च बहुनिर्मलम् ॥

अमन्दश्चाभियोगोऽस्याः कारणं काव्यसम्पदः ।
अत्र कारणमेतेन त्रितयं काव्यकारणम् ॥"
मम्मटस्यात्र विषये वामनो मार्गदर्शकः ।
रुद्रटो हृदयान्तःस्थां गूढां वाचमुपाददे ॥

"मनसि सुसमाधिनि, विस्फुरणमनेकधाभिधेयस्य ।
अक्लिष्टानि पदानि च विभान्ति यस्यामसौ शक्तिः ॥

प्रतिभेत्यपरैरुदिता सहजोत्पाद्या च द्विधा भवति ।
पुंसा सहजातत्वादनयोस्तु ज्यायसी सहजा ॥
स्वस्यासौ संस्कारे परमपरं मृगयते . यतो हेतुम् ।
उत्पाद्या तु कथञ्चिद्व्युत्पत्त्या जन्यते परया ॥
छन्दोव्याकरणकलालोकस्थितिपदपदार्थविज्ञानात् ।
युक्तायुक्तविवेको व्युत्पत्तिरियं समासेन ॥
अधिगतसकलज्ञेयः सुकवेः सुजनस्य सन्निधौ नियतम् ।
नक्तं दिनमभ्यस्येदभियुक्तः शक्तिमान्काव्यम् ॥
तस्यासारनिरासात्सारग्रहणाच्च चारुणः करणे ।
त्रितयमिदं व्याप्रियते शक्तिर्व्युत्पत्तिरभ्यासः ॥"
अत्र त्रितयमित्येतन्मिलितानां निदर्शनम् ।
हेमचन्द्रं वाग्भटोऽपि तथैवानुकरोति हि ॥
"व्युत्पत्त्यभ्याससंस्कृता प्रतिभैवास्य कारणम् ॥"
प्रतिभा संस्कृतैवेति त्रितयं हेतुरापतेत् ॥
अत्र पीयूषवर्षोऽपि ववर्ष प्रतिभामृतम् ।
"प्रतिभैव श्रुताभ्याससहिता कवितांप्रति ।
हेतुर्मृदम्बुसम्बद्धबीजव्यक्तिर्लतामिव ॥"
शोधिते सहितैवेति कारणं त्रितयं मतम् ।
उक्तं केशवमिश्रेण "तद्धेतुः प्रतिभादिकम् ।"
हेतुरित्येकवचनमादिग्रहणमेव च ॥
उल्लिख्य मम्मटमतं पूर्णतः स्वीकृतं ततः ।

वृद्धसम्मतिमप्यत्र प्रमाणे संन्यवेशयत् ॥
"मनः प्रसत्तिः प्रतिभा प्रातःकालेऽभियोगिता ।
अनेकशास्त्रदर्शित्वमित्यर्था लोकहेतवः ॥
द्वित्रकोशपरिज्ञानं द्वित्रव्याकरणज्ञता ।
छन्दोविद्याप्रवीणत्वं काव्येऽवश्यमपेक्ष्यते ॥"
मते पण्डितराजस्य जगन्नाथस्य धीमतः ।
काव्यस्य कारणन्त्वस्य " केवला प्रतिभा" मता ॥
सरस्वतीस्वरूपोऽपि किन्तु नो विश्वसेद्यदा ।
तदा कैव कथान्येषां शक्तेर्हेतौ तु केवलम् ।
"प्रसरेत्प्रसृतं वापि यां विना नैव तत्पुनः ।"
अत्र वेति पदं दत्त्वा तेनैव प्रकटीकृतः ॥
पण्डितप्रतिमूर्तीनां पर्याप्ता प्रतिभा खलु ।
साधारणजनानान्तु शक्त्यादिमिलिता मता ॥

**वृ०— अथात्र वर्ण्यते काव्यं स्वरूपं कविदर्शितम् ।**

**का०—तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि ।**

**वृ०— दोषा गुणा ह्यलङ्कारा वक्ष्यन्ते सप्तमादिषु ।**
**क्वापीत्यनेनैतदाह सालङ्कारौ तु सर्वतः ॥**
**स्फुटालङ्काररहितौ क्वचित्तावपि सम्मतौ ।**
**यथोदाहरणं चापि ज्ञेयमित्यनलङ्कृतेः ॥**
**यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-**
**स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।**

सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥
अत्र स्फुटो नालङ्कारः काश्चिदित्यस्ति निर्णयः ।
विप्रलम्भरसस्यापि प्राधान्यमिह विद्यते ।
तेन नैवात्र रसवदलङ्कारोऽपि सम्भवेत् ॥

टि०—न चापि वाचकाभावे विशेषोक्तिविभावने ।
विश्वनाथमते तर्हि कथं सङ्करतानयोः ॥
हहो "अदोषावित्यत्र नञ्समासः किमर्थकः ?
अभावार्थो यदि ततः कारिकार्थो भविष्यति ॥
निर्दोषावेवशब्दार्थौ काव्यमित्यभिधीयते ।
तदा दोषस्य सत्तायां काव्यमेव न सम्भवेत् ॥
"न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः ।
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः ।
धिक् धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा,
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥"
वृथाशब्दस्य प्राधान्ये समासत्वेन गौणता ।
तद्विधेयाविमर्शाख्यदोषः पादे चतुर्थके ॥
अत एतत्कदाचिन्न काव्यम्भवितुमर्हति ।
तथाप्युत्तमकाव्यत्वं ध्वनिज्ञैरङ्गीकृतम् ॥
"(स्वर्गग्रामटिकाविलुण्ठनसमुच्छूनैर्वृथा किं भुजैः
इत्थं पाठविधिप्रकल्पनपरे काव्ये न दोषो भवेत् ॥)

तदकाव्यं यत्र दोषो दोषाभावश्च यत्र तत् ।
इति संशोधने काव्यमकाव्यं वा भवेन्नु किम् ॥
अल्पार्थश्चेद्यदि ततः कारिकार्थो भवेदयम् ।
कथञ्चिद्दोषसत्तायामेव काव्यं भवेदिति ॥
इत्थञ्चेद्दोषरहितौ तौ न काव्यं कथञ्चन ।
" स्थिताः क्षणं पक्ष्मसु ताडिताधराः,
पयोधरोत्सेधनिपातचूर्णिताः ।
वलीषु तस्याः स्खलिताः प्रपेदिरे,
क्रमेण नाभिं प्रथमोदबिन्दवः ॥ "
दोषाभावेऽपि विबुधैः सुकाव्यमिति गीयते ।
कादाचित्को भवेद्दोष ईषदेवाथवा ततः ॥
न वाच्यमीदृग्भो धीमन् काव्यस्य लक्षणं यतः ।
"कीटानुविद्धरत्नादिसाधारण्येन काव्यता ।
दुष्टेष्वपि मता यत्र रसाद्यनुगमः स्फुटः ॥"
कविराजमतञ्चैतत्संक्षेपेण समुद्धृतम् ।
क्वचित्काव्ये भवेद्दोषो रसहानिकरस्तु यः ॥
त्याज्यः स एव विज्ञेय एतावान्मम्मटाशयः ॥
" पठ्यते काव्यमुच्चैर्हि काव्यादर्थोऽवगम्यते ।
लौकिकव्यवहारस्य प्रमाणत्वेन मन्मते ॥
काव्यं शब्दविशेषोऽयं न शब्दार्थौ कदाचन ।"
इति पण्डितराजस्तु नागेशेन विरुध्यते ॥
" बुद्धं काव्यं श्रुतं,काव्यं पठितं काव्यमेव च । "

लौकिकव्यवहारस्य दर्शनादपि वै पुनः ।
शब्दार्थावेव सामान्यं काव्यमित्यभिधीयते ॥
"तदधीते तद्वेदेति" सूत्रे पाणिनिनिर्मिते ।
'शब्दमधीते वेदार्थ' मिति भाष्ये पतञ्जलिः ॥
अष्टमे श्रीमतैवोक्तं "रसधर्माः गुणाः स्मृताः ।
अधुना "सगुणौ" दत्तं विशेषणमितः कथम् ॥
" सरसा " वित्युपादाने काव्ये सरसता भवेत् ।
"गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता ॥"
इत्येतद्विश्वनाथेन कथं नैव व्यलोकि भोः ?
" सगुणौ " कथनेनात्र ह्येतदेव प्रतीयते ॥
रीतिलक्षणवृत्तीनामपि स्याद्ग्रहणं यथा ।
इत्थमच्युतरायेण सुस्पष्टं प्रतिपादितम् ॥
"अङ्गीकरोति यः काव्यं शब्दार्थावनलङ्कृती ।
असौ न मन्यते कस्मादनुष्णमनलं कृती ॥"
पीयूषवर्षवार्तैषा चन्द्रालोके विलोक्यते ।
"क्वापीत्यनेनैतदाह सालङ्कारौ तु सर्वतः ।
स्फुटालङ्काररहितौ क्वचित्तावपि सम्मतौ ॥"
विदुषा मम्मटेनैव प्रकाशे वै प्रकाशितः ।
विस्मृत तेन कविना कथं तन्नैव वेद्म्यहम् ॥
काव्यलक्षणमेतावत्प्रकाशस्य परीक्षितम् ।
अधुना कविशब्दस्य व्युत्पत्तिं दर्शयाम ताम् ॥
वर्णार्थकात्कवृधातोरभेदादनयोस्तथा ।

कवत्यर्थाद्वर्णयति नूनमर्थान्नवान्नवान् ॥
उत्पत्तिं कविशब्दस्य मनुते राजशेखरः ।
कविकर्म भवेत्काव्यं शब्दार्थनिर्विशेषकम् ॥
'कूङ्शब्दे' इत्यतो धातोः केचिदुत्पादयन्ति च ।
शब्दः काव्यं भवेत्तेन जगन्नाथादिसम्मतम् ॥
वस्तुतस्तु "नामरूपे" इति श्रुत्यनुसारतः ।
शब्दार्थावेव तत्काव्यं शब्दः केवलमेव न ॥
अत्र प्रथमतो ब्रूते व्यासदेवोऽग्निसाक्षिकम् ।
"संक्षेपाद्वाक्यमिष्टार्थव्यवच्छिन्ना पदावली ।
काव्यं स्फुरदलङ्कारगुणवद्दोषवर्जितम् ॥
वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम् ॥"
शब्दार्थौ सहितौ काव्यमिति भामहवागभूत् ।
काव्यादर्शे दण्डिनापि तथैवोक्तं सुलक्षणम् ॥
"शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली ॥"
"वर्तते काव्यशब्दोऽत्र गुणालङ्कारयुक्तयोः ।
शब्दार्थयोरिति" पुनर्वामनोऽपि जगौ ततः ॥
रुद्रटो "ननुशब्दार्थौ काव्य" मख्यापयत्पुनः ।
"काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्व-
स्तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये ॥
केचिद्वाचां स्थितमविषये तत्वमूचुस्तदीयं
ध्वन्यालोके प्रकटितमहो तत्तु शब्दार्थरूपम् ॥
तथाभिनवगुप्तोऽपि स्वीचकार मतं शुभम् ।

लौकिकव्यवहारस्य दर्शनादपि वै पुनः।
शब्दार्थावेव सामान्यं काव्यमित्यभिधीयते॥
"तदधीते तद्वेदेति" सूत्रे पाणिनिनिर्मिते।
'शब्दमधीते वेदार्थ' मिति भाष्ये पतञ्जलिः॥
अष्टमे श्रीमतैवोक्तं "रसधर्माः गुणाः स्मृताः।
अधुना "सगुणौ" दत्तं विशेषणमितः कथम्॥
" सरसा " विदुपादाने काव्ये सरसता भवेत्।
"गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता॥"
इत्येतद्विश्वनाथेन कथं नैव व्यलोकि भोः?
" सगुणौ " कथनेनात्र ह्येतदेव प्रतीयते॥
रीतिलक्षणवृत्तीनामपि स्याद्ग्रहणं यथा।
इत्थमच्युतरायेण सुस्पष्टं प्रतिपादितम्॥
"अङ्गीकरोति यः काव्यं शब्दार्थावनलङ्कृती।
असौ न मन्यते कस्मादनुष्णमनलं कृती॥"
पीयूषवर्षवार्तेवा चन्द्रालोके विलोक्यते।
"क्वापीत्यनेनैतदाह सालङ्कारौ तु सर्वतः।
स्फुटालङ्काररहितौ क्वचित्तावपि सम्मतौ॥"
विदुषा मम्मटेनैव प्रकाशे वै प्रकाशितः।
विस्मृतं तेन कविना कथं तन्नैव वेद्म्यहम्॥
काव्यलक्षणमेतावत्प्रकाशस्य परीक्षितम्।
अधुना कविशब्दस्य व्युत्पत्तिं दर्शयाम ताम्॥
वर्णार्थकात्कवृधातोरभेदाद्वत्रयोस्तथा।

कवत्यर्थाद्वर्णयाति नूनमर्थान्नवान्नवान् ॥
उत्पत्तिं कविशब्दस्य मनुते राजशेखरः ।
कविकर्म भवेत्काव्यं शब्दार्थनिर्विशेषकम् ॥
'कूङ्शब्दे' इत्यतो धातोः केचिदुत्पादयन्ति च ।
शब्दः काव्यं भवेत्तेन जगन्नाथादिसम्मतम् ॥
वस्तुतस्तु "नामरूपे" इति श्रुत्यनुसारतः ।
शब्दार्थावेव तत्काव्यं शब्दः केवलमेव न ॥
अत्र प्रथमतो ब्रूते व्यासदेवोऽग्निसाक्षिकम् ।
"संक्षेपाद्वाक्यमिष्टार्थव्यवच्छिन्ना पदावली ।
काव्यं स्फुरदलङ्कारगुणवद्दोषवर्जितम् ॥
वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम् ॥"
शब्दार्थौ सहितौ काव्यमिति भामहवागभूत् ।
काव्यादर्शे दण्डिनापि तथैवोक्तं सुलक्षणम् ॥
"शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली ॥"
"वर्तते काव्यशब्दोऽत्र गुणालङ्कारयुक्तयोः ।
शब्दार्थयोरिति" पुनर्वामनोऽपि जगौ ततः ॥
रुद्रटो "ननुशब्दार्थौ काव्य" मख्यापयत्पुनः ।
"काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्व-
स्तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये ॥
केचिद्वाचां स्थितमविषये तत्वमूचुस्तदीयं
ध्वन्यालोके प्रकटितमहो तत्तु शब्दार्थरूपम् ॥
तथाभिनवगुप्तोऽपि स्वीचकार मतं शुभम् ।

कुन्तलोऽप्यवद "तसन्तौ सुहृदाविव सम्मतौ ।
शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि ॥
बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि ।"
उक्त महिमभट्टेन व्यासाद्वाक्यं प्रगृह्य च ।
"काव्यं ध्वन्यात्मकं वाक्य" मित्यत्र शृणु वाचिकम् ॥
ध्वनिः शब्दार्थयुगलं मम्मटेन निरूपितम् ।
शब्दार्थौ सहितौ काव्य "मित्येव निर्णयस्ततः ॥
रुद्रभट्टेन "कर्तव्यं काव्यं रसनिरन्तरम् ।"
"निर्दोष गुणवत्काव्यमलङ्कारैरलङ्कृतम् ।
रसान्वितं कविः कुर्वन्" भोजराजो विराजते॥
तथौचित्यविचारेऽपि क्षेमेन्द्रः पुनराददे ।
"औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम् ॥"
"काव्यं रसादिमद्वाक्य" मिति शौद्धोदनिर्जगौ ।
वाक्यं शब्दविशेषोऽय रसश्चार्थं विना कथम् ॥
आदिशब्दाद्गुणादीना ग्रहण चापि सम्भवेत् ।
तथा च वाग्भटस्यैव फलितार्थोऽमरस्ततः ॥
"साधुशब्दार्थसम्भेदं गुणालङ्कारभूषितम् ।
स्फुटरीतिरसोपेतं काव्य" मित्यभिधीयते ॥
काव्यम् "अदोषौ सगुणौ सालङ्कारौ च शब्दार्थौ ।"
स्पष्टं हि हेमचन्द्रो निजकाव्यानुशासनेऽवोचत् ॥
तथैव जयदेवोऽपि चन्द्रालोके जगाद च ।
"निर्दोषा लक्षणवती सरीतिर्गुणभूषिता ।

सालङ्कारमनेकवृत्तिर्वा[illegible] ॥"
विद्याधरविनोदेऽप्येकावल्यां निवेद्यते ।
" शब्दार्थौ मूर्तिराख्यातौ जीवितं व्यङ्ग्यवैभवम् ॥"
काव्यलक्षणमालक्ष्य वक्त्यलङ्कारचन्द्रिका ।
"सगुणा सालङ्कारा रसभावा दोषपरिहारा ।
जगदनुरञ्जनशीला कविकुलशीला सरस्वती जयात ॥"
अपनीयैवादिपदमात्मकं सन्निवेश्य च ।
कविराजो विश्वनाथस्तथा शौद्धोदनेर्मते ।
" वाक्यं रसात्मकं काव्य " मित्यथोचत्ततः परम् ।
यदि चेद्रस एवात्र कविराजाय रोचते ॥
वस्त्वलङ्कारप्राधान्ये नीरसं किम्भविष्यति ?
परम्पराप्राप्तरसमिष्टमेतन्मनीषिणः ॥
तन्मृगो धावतीत्यादावपि काव्यत्वमापतेत् ।
इत्थं पण्डितराजेन कविराजो विरोधितः ॥
विद्यानाथो वेदयति प्रतापरुद्रतः खलु ।
" गुणालङ्कारसहितौ शब्दार्थौ दोषवर्जितौ ।
गद्यपद्योभयमयं काव्यं काव्यविदो विदुः ॥ "
श्रीमान् केशवमिश्रस्तु शौद्धोदनिपथानुगः ।
तथैव "रमणीयार्थप्रतिपादक" इत्यसौ ॥
"शब्दः काव्य" मिति प्राह जगन्नाथस्ततः परम् ।
आसीद्यदत्र वक्तव्यं तत्पूर्वं प्रतिपादितम् ॥
अन्ते चाच्युतरायेण निर्ममे काव्यलक्षणम ।

" तत्र निर्दोषशब्दार्थगुणवत्वे सति स्फुटम् ।
गद्यादिबन्धरूपत्वं काव्यसामान्यलक्षणम् ॥"
प्रकाशमतमागृह्य प्राह गोविन्दठक्कुरः ।
रसस्य वालङ्कारस्य सत्त्वावश्यं भवेदिति ॥"
अथोच्यते काव्यभेदा ह्युत्तमाधममध्यमाः ।

**का०—इदमुत्तममतिशयिनि व्यङ्ग्ये,**
**वाच्याद्ध्वनिर्बुधैः कथितः ॥**

**वृ०— मुख्यतः स्फोटरूपस्य व्यङ्ग्यस्य व्यञ्जनक्षमः ।**
**शब्दोध्वनिरिति प्रोक्तो वैयाकरणकोविदैः ॥**
**ततस्तन्मतविद्भिरन्यैः कविभिरेव च ।**
**अधरीकृतवाच्यार्थो व्यङ्ग्यव्यञ्जनशक्तिमान् ॥**
**शब्दार्थयुगलं यच्च स मञ्जरीकृतो ध्वनिः ।**

टि०—ध्वन्यालोके तथाचार्यः श्रीमदानन्दवर्धनः ॥
"यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ ।
व्यक्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः ॥
जगौ महिमभट्टश्च निजव्यक्तिविवेचने ।
"वाच्यस्तदनुमितो वा यत्रार्थोऽर्थान्तरं प्रकाशयति ।
सम्बन्धतः कुतश्चित्सा काव्यानुमितिरित्युक्ता ॥"

× × ×

आत्मा विवक्षमाणो हि मनः प्रेरयते, मनः ।
देहस्थं वह्निमाहन्ति स प्रेरयति मारुतम् ॥

परावाग्रूपमासाद्य स्थितो यो, नाभिमाश्रयेत् ।
पश्यन्तीनामभागत्र योगिनामेव गोचरः ॥
हृद्देशेऽथ समागत्य मध्यमासंज्ञितोऽभवत् ।
स्फोटः स एव कथितः शब्दशास्त्रविशारदैः ॥
वैखरीमभिधां प्राप्य यदा कण्ठं समाश्रयेत् ।
शब्दो ध्वनिरिति प्रोक्तः सर्वसामान्यगोचरः ॥
व्यङ्ग्योऽथ स्फोट शब्दोऽत्र व्यञ्जकश्चश्च ध्वनिर्मतः ।
शब्दशास्त्रप्रवीणानां मतमेतत्समुद्धृतम् ॥
शब्दार्थयुगलं व्यङ्ग्यो ध्वनिर्व्यञ्जक उच्यते ।
अलङ्कार प्रियाणाञ्च मतमेतद्विलोक्यते ॥
श्रूयतामुत्तमं काव्यं सुन्दरं रसगर्भितम् ।
निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो,
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे,
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥
प्राधान्येनाधमपदेनैवमत्र प्रतीयते ।
तत्सन्निधावेव रन्तुं गतासि न परत्र तु ॥
टि०—मुख्यार्थबाधसत्वेन विपरीतात्र लक्षणा ।
तथा च लक्ष्यते 'नूनं त्वं गतासि तदान्तिकम् ॥'
व्यङ्ग्यो 'रमण' मित्येवं विश्वनाथादयो जगुः ।
न काचिद्धानिरेतेन कामं भवतु लक्षणा ॥
व्यङ्ग्योऽधमपदेनैवेत्याह गोविन्दठक्कुरः ।

का०—अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम्

वृ०— ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम् ।
पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया ॥
नागता दत्तसङ्केता त्वं वञ्जुललतागृहे ।
इति व्यङ्ग्यं गुणीभूतं गौणरूपेण यत्स्थितम् ॥
चमत्कारित्वमस्त्येव वाच्यस्य तदपेक्षया ।

का०—शब्दचित्रं वाच्यचित्रमव्यङ्ग्यन्त्ववरं स्मृतम्

वृ०— गुणालङ्कारयुक्तं हि चित्रमित्यभिधीयते ।
स्फुटप्रतीयमानार्थरहितं यत्तु विद्यते ॥
तद्व्यङ्ग्यं भवेन्नूनमवरन्त्वधमं पुनः ।
स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटा,
मूर्च्छन्मोहमहर्षिहर्षविहितस्नानाह्निकाह्नाय वः ।
भिद्यादुद्यदुदारदर्दुरदरीदीर्घादरिद्रद्रुम-
द्रोहोद्रेकमहोर्मिमेदुरमदामन्दाकिनी मन्दताम् ॥
अत्रानुप्रासबाहुल्याच्छब्दचित्रमितीरितम् ।

टि०—रतिं गङ्गाविषयिणीं ध्वनयेयुश्च केचन ॥
कवेर्विवक्षाविरहे किन्तु नात्र ध्वनिर्मता ।
सम्मतिं ध्वनिकारस्य पश्यन्त्वत्र समुद्धृताम् ॥
"रसभावादिविषयविवक्षाविरहे सति ।
अलङ्कारनिबन्धो यः स चित्र विषयो मतः ॥"

उ०— विनिर्गतं मानदमात्ममन्दिरा-
द्भवत्युपश्रुत्य यदृच्छयापि यम्।
ससम्भ्रमेन्द्रद्रुतपातितार्गला
निमीलिताक्षीव भियामरावती॥
अत्रोपमायाः प्राधान्याद्वाच्यचित्रं विनिश्चितम्।

टि०— हयग्रीवप्रभावस्य वर्णनेनात्र यः स्फुटम्।
वीरोऽभिव्यज्यते किन्तु न विवक्षा कवेरिह॥
काव्यस्य भेदविषये वदत्यानन्दवर्धनः।
" अर्थः सहृदयश्लाघ्यः काव्यात्मा यो व्यवस्थितः॥
वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ।
तत्र वाच्यः प्रसिद्धो यः प्रकारैरुपमादिभिः॥
बहुधा व्याकृतः सोऽन्यैः काव्यलक्ष्मविधायिभिः।
प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।
यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु॥
प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैव व्यवस्थितेः॥
काव्ये उभे ततोऽन्यद्यत्तच्चित्रमभिधीयते।
चित्रं शब्दार्थभेदेन द्विविधं च व्यवस्थितम्॥
तत्र किञ्चिच्छब्दचित्रं वाच्यचित्रमतः परम्।"
तथैव कविराजोऽपि प्रकाशयति वै मतम्॥
" काव्यं ध्वनिर्गुणीभूतव्यङ्ग्यं चेति द्विधा मतम्।"
अव्यङ्ग्यमिति यत्प्रोक्तं मम्मटेन विजानता॥

तत्र स्याद्व्यङ्ग्यराहित्यमिति चेन्नैव काव्यता ।
ईषद्व्यङ्ग्यमिति स्याच्चेदास्वाद्यत्वे ध्रुवं मता ॥'
अथ पण्डितराजस्तु वक्ति काव्य चतुर्विधम् ।
सर्वप्रथमतो नूनमुत्तमोत्तमसंज्ञितम् ॥
उत्तम मध्यमञ्चैवमधमाख्य तत. परम् ।
एवञ्च फलितार्थोऽभूद्ध्वनिस्तत्रोत्तमोत्तमम् ॥
उत्तमञ्च गुणीभूतव्यङ्ग्यं भवति तन्मते ।
अर्थचित्र मध्यम वै शब्दचित्रमथोऽधमम् ॥
सारे चाच्युतरायोऽपि सामञ्जस्य व्यधात्पुन' ।
" रसालङ्कारमुख्यत्वभेदेनेदम्भवेद्द्विधा ॥
सरसाख्यञ्च चित्राख्य स्वम्भोरूशरीरवत् ।
तत्राद्यन्तु द्विधा व्यङ्ग्यप्रधानगुणभावतः ॥
प्रथम ध्वनिसञ्ज्ञ स्या न्नानाभेदुत्तमोत्तमम् ।
द्वितीयन्तूत्तम ज्ञेयमष्टधा परिकीर्तितम् ॥
द्विधान्यदपि भूयेत्र मध्यमञ्चाधम क्रमात् ।
गुणप्रधानभावेन मिथ. शब्दार्थयो. स्थितेः ॥



# काव्य-प्रकाशः ।

## द्वितीय उल्लासः ।

वृ०— शब्दार्थयोः स्वरूपञ्च कथ्यते क्रमतोऽधुना ।

का०—स्याद्वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा ।
वाच्यादयस्तदर्थाः स्युस्तात्पर्यार्थोऽपि केषुचित् ॥

वृ०— वाचकस्यात्र वाच्यार्थो लक्ष्यो लाक्षणिकस्य च ।
व्यञ्जकस्यापि शब्दस्य व्यङ्ग्योऽर्थः परिकीर्तितः ॥

× × ×

टि०—अन्वयो न भवेद्यत्र यत्पदस्य क्रियां विना ।
आकाङ्क्षा सैव गौरश्वः पुरुषश्च गजो यथा ॥
पदार्थे तत्र तद्वत्ता योग्यता परिकीर्तिता ।
'वह्निना सिञ्चतीत्यादौ' शक्त्यभावान्न योग्यता ॥
अन्वयोऽपेक्ष्यते यत्र येनासौ सन्निधिर्मता ।
'अग्निमान्देवदत्तेन पर्वतो भक्षितं न सा ॥

वृ०— आकाङ्क्षायोग्यतासक्तिवशादत्र परस्परम् ।
तेषां जात्यादिरूपाणां पदार्थानां समन्वये ॥
अपदार्थोऽपि वाक्यार्थो विशेषाकारवांश्च यः ।
तात्पर्यनामको भाट्टैऽभिहितोऽभिहितान्वये ॥

तत्र स्याद्व्यङ्ग्यराहित्यमिति चेन्नैव काव्यता ।
ईषद्व्यङ्ग्यमिति स्याच्चेदास्वाद्यत्वे ध्रुवं मता ॥'
अथ पण्डितराजस्तु व्यक्ति काव्यं चतुर्विधम् ।
सर्वप्रथमतो नूनमुत्तमोत्तमसंज्ञितम् ॥
उत्तमं मध्यमञ्चैवमधमाख्यं ततः परम् ।
एवञ्च फलितार्थोऽभूद्ध्वनिस्तत्रोत्तमोत्तमम् ॥
उत्तमञ्च गुणीभूतव्यङ्ग्यं भवति तन्मते ।
अर्थचित्रं मध्यमं वै शब्दचित्रमथोऽधमम् ॥
सारे चाच्युतरायोऽपि सामञ्जस्यं व्यधात्पुनः ।
" रसालङ्कारमुख्यत्वभेदेनेदम्भवेद्द्विधा ॥
सरसाख्यञ्च चित्राख्यं स्वरम्भोरुशरीरवत् ।
तत्राद्यन्तु द्विधा व्यङ्ग्यप्रधानगुणभावतः ॥
प्रथमं ध्वनिसंज्ञं स्या नानाभेद्युत्तमोत्तमम् ।
द्वितीयन्तूत्तमं ज्ञेयमष्टधा परिकीर्तितम् ॥
द्विधान्यदपि भूयैव मध्यमञ्चावम क्रमात् ।
गुणप्रधानभावेन मिथः शब्दार्थयोः स्थितेः ॥



# काव्य-प्रकाशः ।

## द्वितीय उल्लासः ।

वृ०— शब्दार्थयोः स्वरूपञ्च कथ्यते क्रमतोऽधुना ।

का०—स्याद्वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा ।
वाच्यादयस्तदर्थाः स्युस्तात्पर्यार्थोऽपि केषुचित् ॥

वृ०— वाचकस्यात्र वाच्यार्थो लक्ष्यो लाक्षणिकस्य च ।
व्यञ्जकस्यापि शब्दस्य व्यङ्ग्योऽर्थः परिकीर्तितः ॥

× × ×

टि०—अन्वयो न भवेद्यत्र यत्पदस्य क्रियां विना ।
आकाङ्क्षा सैव गौरश्वः पुरुषश्च गजो यथा ॥
पदार्थे तत्र तद्वत्ता योग्यता परिकीर्तिता ।
'वह्निना सिञ्चतीत्यादौ' शक्त्यभावान्न योग्यता ॥
अन्वयोऽपेक्ष्यते यत्र येनासौ सन्निधिर्मता ।
'अग्निमान्देवदत्तेन पर्वतो भक्षितं न सा ॥

वृ०— आकाङ्क्षायोग्यतासक्तिवशादत्र परस्परम् ।
तेषां जात्यादिरूपाणां पदार्थानां समन्वये ॥
अपदार्थोऽपि वाक्यार्थो विशेषाकारवांश्च यः ।
तात्पर्यनामको भाट्टैऽभिहितोऽभिहितान्वये ॥

टि०—' गामानये ' त्यत्र वालो व्यक्तिं सास्नावतीं तदा ।
विलोक्य विज्ञो भवति 'गौरयं कथ्यते जनैः ॥
' अश्वमानय ' संश्रुत्य दृष्ट्वा चानयनक्रियाम् ।
' अयमानयनस्यार्थो ' व्युत्पत्तेरस्त्ययं क्रम. ॥
" स्वार्थबोधे समाप्तानामङ्गाङ्गित्वव्यपेक्षया ।
शब्दानामेकवाक्यत्व पुनः संहत्य जायते ॥ "
तत्तु तात्पर्यवृत्त्येति कथितोऽभिहितान्वये ।

सू०— अथान्विताभिधानेतु वाक्यार्थो वाच्य एव सः ॥

टि०—"वृद्धा युवानः शिशवः कपोताः खले यथामी युगपत्पतन्ति ।
तथैव सर्वे युगपत्पदार्था. परस्परेणान्वयिनो भवन्ति ॥ "
एव चान्वित एवार्थो वाक्ये वाक्यार्थसङ्गतौ ।
क्षमस्तात्पर्यवृत्तेस्तन्नैवात्रस्यकता पुनः ॥ "

का०—सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते ।

टि०—केवलं नतु शब्दस्य तथा नैकनरस्य वा ॥
माए घरोवअरणं अज्ज क्खु ग त्थिति साहिअं तुमए ।
ताभण किं करणिज्जं एमेअ ण वासरो ठाई ॥

सू०— सम्पाद्य गृहकार्यस्यावश्यकर्तत्वमत्र वै ।
'इयं स्वैरविहाराय गन्तुकामाभवत्ननु ॥
उक्तरूपेण वाच्येन ह्यर्थेनवाभिव्यज्यते ।

सू०— साहेंती सहि सुहवं खणे खणे दुम्मिआसि मज्झकए ।
सब्भावणेह करणिज्जसरिसं दाव विरइअं तुमए ॥

टि०— अत्रोपभोगचिह्नानि विलोक्यापि च नायिका ।
उपकारं स्वीकरोति दूतिकायाः प्रहर्षिता ॥
इति मुख्यार्थबाधेन लक्षणा समुपासिता ।

वृ०— मत्प्रियं रमयन्त्या वै त्वयात्र शत्रुता कृता ॥
लक्ष्यार्थ एष विज्ञेयो व्यङ्ग्यार्थोऽयं पुनः स्मृतः ।
तथा कामुकविषयमपराधप्रकाशनम् ॥

वृ०— उअ निच्चल निप्फंदा भिसिणीपत्तम्हि रेहइ बलाआ ।
णिम्मलमरगभाअण परिट्ठिदा संखसुत्तिव्व ॥
निष्पन्दत्वेन वाच्येन ह्याश्वस्तत्वं तु व्यज्यते ।
एतेन जनराहित्यमिति व्यङ्ग्यं ततः परम् ॥
सङ्केतस्थानमेतद्वै फलितार्थोऽभवत्ततः ।
आश्वस्तत्वेन व्यक्तेन जनागमनशून्यता ॥
नत्वमत्रागतो नूनं मिथ्यैव परिजल्पसे ।

टि०— आगतः स्या यदि ततः कथमेषा सुनिश्चला ॥

वृ०— अथवेदमभूद्व्यङ्ग्यं क्रमेण परिदर्शितम् ।
स्वरूपं वाचकादीनां क्रमप्राप्तं प्रकाश्यते ॥

का०—साक्षात्सङ्केतितं योऽर्थमभिधत्ते स वाचकः ।

टि०— साक्षादिति पदाभावे शब्दे लाक्षणिकेऽपि च ॥
वाचकत्वं समागच्छेल्लक्ष्ये सङ्केततः सदा ।

वृ०— इहाग्रहीतसङ्केतः शब्दो नार्थं प्रकाशयेत् ॥
तद्यत्राव्यवधानेन सङ्केतो यस्य गृह्यते ।
स एव वाचकः शब्दो विबुधैः परिगीयते ॥

का०—सङ्केतितश्चतुर्भेदो जात्यादिर्जातिरेव वा ॥

वृ०—प्रवृत्तौ च निवृत्तौ च योग्या व्यक्तिर्हि गण्यते ।
अर्थक्रिया कारितया यद्यप्येष विनिर्णयः ॥
व्यक्तेस्त थाप्यनन्तत्वाद्दोषआनन्त्यमापतेत् ।
भविष्यन्त्यां तथा वृत्तौ भवेच्च व्यभिचारिता ॥
अतः कदापि सङ्केतस्तस्यां व्यक्तौ न युज्यते ।
किञ्च "गौरय शुक्लोऽय चलो डित्यस्तथैव च ॥
इत्यादीनां हि शब्दानां विभागो न भवेदिति ।
उपाधावेव सङ्केतः क्रियते च बुधैस्ततः ॥
उपाधिर्द्विविधो ज्ञेयो वस्तुधर्मः [illegible] चादिमः ।
यदृच्छात्मकनामापि द्वितीयः स निगद्यते ॥
द्विविधो वस्तुधर्मोऽपि सिद्धः साध्यस्तथैव च ।
सिद्धोऽपि द्विविधो ज्ञेयः पदार्थप्राणदः पुनः ॥
विशेषाधानहेतुश्च तत्राद्यो जातिरुच्यते ।
उक्तं वाक्यपदीयेऽपि ग्रन्थे वै हरिनिर्मिते ॥
"अत्र नैव स्वरूपेण गौरथो नाप्यगौर्भवेत् ।
गौर्हि गोत्वाभिसम्बन्धाद्गोत्वं जातिर्न संशयः ॥
भिन्नक्रियागुणेष्वपि बहुषु द्रव्येषु चित्रगात्रेषु ।
एकाकारा बुद्धिर्भवति यतः सा भवेज्जातिः ॥

टि०—आलम्ब्य जातिं विषयं केचिदेवं वदन्ति च ।
" न याति न च तत्रासीन्नचोत्पन्नं न चांशवत् ॥

जहाति पूर्वं नाधारंमदो व्यसनसन्ततिः ॥ "

अत्रापि हरिणा दत्तमुत्तरं स्पष्टमेव तत् ।

"सम्बन्धभेदात्सत्तैव भिद्यमाना गवादिषु ॥

जातिरित्युच्यते तस्यां सर्वे शब्दाः व्यवस्थिताः ।

ताम्प्रातिपदिकार्थञ्च धात्वर्थञ्च प्रचक्षते ॥

सा नित्या सा महानात्मा तामाहुस्त्वतलादयः । "

अनयोर्मतयोः सार एष एव प्रतीयते ।

"सत्यासत्यौ तु यौ भावौ प्रतिभावं प्रतिष्ठितौ ।

सत्या तु सैव जातिः स्यादसत्या व्यक्तयो मताः ॥"

**सू०— द्वितीयो वस्तुधर्मोऽथ सिद्धो यो वस्तुजन्मनः ।**
**विशेषाधानहेतुः स गुण एव निगद्यते ॥**

टि०—"द्रव्यादपृथग्भूतो भवति गुणः सततमिन्द्रियग्राह्यः ।
सहजाहार्यावस्थिक भावविशेषादयं त्रेधा ॥"

सहजः क्षत्रिये शौर्यं काके कार्ष्ण्यं मतो बुधैः ।

आहार्यो नरि पाण्डित्यं पटे रागः प्रवर्तते ॥

आवास्थिकश्च लौहित्यं फले केशे च शुक्लता ।

**सू०— आद्यः पूर्वापरीभूतावयवो यत्र दृश्यते ।**
**क्रियारूपः स विज्ञेयो धर्मोऽलङ्कारवित्तमैः ॥**

टि०—कार्यारम्भं समारभ्य समाप्त्यन्तं तथैव यः ।
हस्तपादादिसञ्चारो वेदितव्या क्रियैव सा ॥

**सू०— अथ डित्थादिशब्दानां स्वरूपं संहृतक्रमम् ।**
**अन्त्यबुद्ध्या च निर्ग्राह्यं वक्त्रा यत्र निजेच्छया ॥**

का०—सङ्केतितश्चतुर्भेदो जात्यादिर्जातिरेव वा ॥

वृ०— प्रवृत्तौ च निवृत्तौ च योग्या व्यक्तिर्हि गण्यते ।
अर्थक्रिया कारितया यद्यप्येष विनिर्णयः ॥
व्यक्तेस्त थाप्यनन्तत्वाद्दोषआनन्त्यमापतेत् ।
भविष्यन्त्यां तथा वृत्तौ भवेच्च व्यभिचारिता ॥
अतः कदापि सङ्केतस्तस्यां व्यक्तौ न युज्यते ।
किञ्च "गौरय शुक्लोऽथ चलो डित्थस्तथैव च ॥
इत्यादीनां हि शब्दानां विभागो न भवेदिति ।
उपाधावेव सङ्केतः क्रियते च बुधैस्ततः ॥
उपाधिर्द्विविधो ज्ञेयो वस्तुधर्मः स चादिमः ।
यदृच्छात्मकनामापि द्वितीयः स निगद्यते ॥
द्विविधो वस्तुधर्मोऽपि सिद्धः साध्यस्तथैव च ।
सिद्धोऽपि द्विविधो ज्ञेयः पदार्थमाणदः पुनः ॥
विशेषाधानहेतुश्च तत्राद्यो जातिरुच्यते ।
उक्तं वाक्यपदीयेऽपि ग्रन्थे वै हरिनिर्मिते ॥
"अत्र नैव स्वरूपेण गौरथो नाप्यगौर्भवेत् ।
गौर्हि गोत्वाभिसम्बन्धाद्गोत्वं जातिर्न संशयः ॥
भिन्नक्रियागुणेष्वपि बहुषु द्रव्येषु चित्रगात्रेषु ।
एकाकारा बुद्धिर्भवति यतः सा भवेज्जातिः ॥

टि०—आलम्ब्य जाति विषयं केचिदेवं वदन्ति च ।
" न याति न च तत्रासीन्नचोत्पन्नं न चांशवत् ॥

जहाति पूर्वं नाचारंमदो व्यसनसन्ततिः ॥ ”

अत्रापि हरिणा दत्तमुत्तरं स्पष्टमेव तत् ।

“सम्बन्धभेदात्सत्तैव भिद्यमाना गवादिषु ॥

जातिरित्युच्यते तस्यां सर्वे शब्दाः व्यवस्थिताः ।

ताम्प्रातिपदिकार्थञ्च धात्वर्थञ्च प्रचक्षते ॥

सा नित्या सा महानात्मा तामाहुस्त्वतलादयः । ”

अनयोर्मतयोः सार एव एव प्रतीयते ।

“सत्यासत्यौ तु यौ भावौ प्रतिभावं प्रतिष्ठितौ ।

सत्या तु सैव जातिः स्यादसत्या व्यक्तयो मताः ॥”

**सू०— द्वितीयो वस्तुधर्मोऽथ सिद्धो यो वस्तुजन्मनः ।**

**विशेषाधानहेतुः स गुण एव निगद्यते ॥**

टि०—“द्रव्यादपृथग्भूतो भवति गुणः सततमिन्द्रियग्राह्यः ।

सहजाहार्यावस्थिक भावविशेषादयं त्रेधा ॥”

सहजः क्षत्रिये शौर्यं काके कार्ष्ण्यं मतो बुधैः ।

आहार्यो नरि पाण्डित्यं पटे रागः प्रवर्तते ॥

आवस्थिकश्च लौहित्यं फले केशे च शुक्लता ।

**सू०— आद्यः पूर्वापदीभूतावयवो यत्र दृश्यते ।**

**क्रियारूपः स विज्ञेयो धर्मोऽलङ्कारवित्तमैः ॥**

टि०—कार्यारम्भं समारभ्य समाप्त्यन्तं तथैव यः ।

हस्तपादादिसञ्चारो वेदितव्या क्रियैव सा ॥

**सू०— अथ डित्थादिशब्दानां स्वरूपं संहृतक्रमम् ।**

**अन्त्यबुद्ध्या च निर्ग्राह्यं वक्त्रा यत्र निजेच्छया ॥**

का०—सङ्केतितश्चतुर्भेदो जात्यादिर्जातिरेव वा ॥

वृ०—प्रवृत्तौ च निवृत्तौ च योग्या व्यक्तिर्हि गण्यते ।
अर्थक्रिया कारितया यद्यप्येष विनिर्णयः ॥
व्यक्तेस्त थाप्यनन्तत्वाद्दोषआनन्त्यमापतेत् ।
भविष्यन्त्यां तथा वृत्तौ भवेच्च व्यभिचारिता ॥
अतः कदापि सङ्केतस्तस्यां व्यक्तौ न युज्यते ।
किञ्च "गौरथ शुक्लोऽथ चलो डित्थस्तथैव च ॥
इत्यादीनां हि शब्दानां विभागो न भवेदिति ।
उपाधावेव सङ्केतः क्रियते च बुधैस्ततः ॥
उपाधिर्द्विविधो ज्ञेयो वस्तुधर्मः स चादिमः ।
यदृच्छात्मकनामापि द्वितीयः स निगद्यते ॥
द्विविधो वस्तुधर्मोऽपि सिद्धः साध्यस्तथैव च ।
सिद्धोऽपि द्विविधो ज्ञेयः पदार्थमाणदः पुनः ॥
विशेषाधानहेतुश्च तत्राद्यो जातिरुच्यते ।
उक्तं वाक्यपदीयेऽपि ग्रन्थे वै हरिनिर्मिते ॥
"अत्र नैव स्वरूपेण गौरथो नाप्यगौर्भवेत् ।
गौर्हि गोत्वाभिसम्बन्धाद्गोत्वं जातिर्न संशयः ॥
भिन्नक्रियागुणेष्वपि बहुषु द्रव्येषु चित्रमात्रेषु ।
एकाकारा बुद्धिर्भवति यतः सा भवेज्जातिः ॥

टि०—आलम्ब्य जातिं विषयं केचिदेवं वदन्ति च ।
" न याति न च तत्रासीन्नचोत्पन्नं न चाशवत् ॥

जहाति पूर्वं नाधारंमदो व्यसनसन्ततिः ॥ ”

अत्रापि हरिणा दत्तमुत्तरं स्पष्टमेव तत् ।

“सम्बन्धभेदात्सत्तैव भिद्यमाना गवादिषु ॥

जातिरित्युच्यते तस्यां सर्वे शब्दाः व्यवस्थिताः ।

ताम्प्रातिपदिकार्थञ्च धात्वर्थञ्च प्रचक्षते ॥

सा नित्या सा महानात्मा तामाहुस्त्वतलादयः । ”

अनयोर्मतयोः सार एष एव प्रतीयते ।

“सत्यासत्यौ तु यौ भावौ प्रतिभावं प्रतिष्ठितौ ।

सत्या तु सैव जातिः स्यादसत्या व्यक्तयो मताः ॥”

**वृ०– द्वितीयो वस्तुधर्मोऽथ सिद्धो यो वस्तुजन्मनः ।**

**विशेषाधानहेतुः स गुण एव निगद्यते ॥**

टि०–“द्रव्यादपृथग्भूतो भवति गुणः सततमिन्द्रियग्राह्यः ।

सहजाहार्यावस्थिक भावविशेषादयं त्रेधा ॥”

सहजः क्षत्रिये शौर्यं काके कार्ष्ण्यं मतो बुधैः ।

आहार्यो नरि पाण्डित्यं पटे रागः प्रवर्तते ॥

आवस्थिकश्च लौहित्यं फले केशे च शुक्लता ।

**वृ०– आद्यः पूर्वापदीभूतावयवो यत्र दृश्यते ।**

**क्रियारूपः स विज्ञेयो धर्मोऽलङ्कारवित्तमैः ॥**

टि०–कार्यारम्भं समारभ्य समाप्त्यन्तं तथैव यः ।

हस्तपादादिसञ्चारो वेदितव्या क्रियैव सा ॥

**वृ०– अथ डित्थादिशब्दानां स्वरूपं संहृतक्रमम् ।**

**अन्त्यबुद्ध्या च निर्गाह्यं वक्त्रा यत्र निजेच्छया ।**

कपित्थडित्थाद्यर्थेपूपाधित्वेन निवेश्यते ।
संज्ञारूपः स सङ्केतो यदृच्छात्मक उच्यते ।
'गौः शुक्लोऽथ चलो डित्थ' इत्यादौ च चतुष्टयी ।
प्रवृत्तिरस्ति शब्दानां महाभाष्यानुसारतः ॥

टि०—जातिं गुणं क्रियां द्रव्यमुवाचात्र पतञ्जलिः ।

× × × ×

परिमाणं भवेन्मानव्यवहारस्य कारणम् ।
अणुदीर्घं महद्ध्रस्वं चतुर्भेदं तदीरितम् ॥
पृथ्व्यप्तेजोवायुवृत्तिर्नित्यश्चानित्यमेव च ।
तत्रानित्यं कार्यरूप परमाणोस्तु नित्यता ॥
एवञ्च तत्र संयुक्तैरनेकैः परमाणुभिः ।
सत्यं भवति लोकाना पदार्थो दृष्टिगोचरः ॥
प्राणदत्वात्पदार्थस्य जातित्वं युज्यते ततः ।
परमाणोर्गुणत्व हि वैशेषिकनये कथम् ॥

स्व०—परमाण्वादिशब्दानां गुणेषु गणनादपि ।
वास्तवं जातिशब्दत्वं गुणत्वं पारिभाषिकम ॥
गुणक्रिया यदृच्छानां वस्तुतस्त्वेकरूपता ।
तथाप्याश्रयभेदेन भेदतैव प्रतीयते ॥
एकस्यैव मुखस्यात्र यथाह्याश्रयभेदतः ।
खड्गे च मुकुरे चैव तैले भिन्नत्वदर्शनम् ॥
शुक्लादिषु हिमपयःशङ्खाद्यालम्बनेषु च ।
वस्तुतस्तु विभिन्नेषु यद्वशेनैव जायते ॥

अयं शुक्लो ह्ययं शुक्लः सर्वदेवेदृशी पुनः ।
तदभिन्नाभिधानेन प्रत्ययोत्पत्तिरत्र या ॥
शुक्लत्वरूपा सा जातिरिति मीमांसका जगुः ।
पाकेषु तण्डुलादीनां गुडादीनां तथैव च ॥
पाकत्वजातिरेवात्र निश्चिता विबुधोत्तमैः ।
बालवृद्धशुकादीनां कथितेष्वपि सर्वदा ।
भिद्यमानेषु डित्थादिशब्देषु च प्रतिक्षणम् ॥
अवश्यं भिद्यमानेषु डित्थाद्यर्थेषु वा पुनः ।
डित्थत्वं विद्यते तत्र जातिः सा परिकीर्तिता ।
सर्वेषामेव शब्दानां जातिरेव च सर्वदा ॥
इत्थं निमित्तीभवति प्रवृत्ताविति निर्णयः ।

टि०—स्वमर्थमभिधायैव यदा स्याद्विरताभिधा ॥
व्यक्तिबोधे न सा शक्ता शाब्दबोधः कथं तदा ।
जात्या व्यक्त्यविनाभावाद्व्यक्तेराक्षेप उच्यते ।
जातौ व्यक्तेरसङ्केतस्तेन किन्तु न तद्ग्रहः ॥
आनन्त्याद्व्यभिचाराच्च व्यक्तावपि न सम्भवेत् ।

वृ०— व्यक्तिर्जातिविशिष्टैव नैयायिकमते पुनः ॥
'तद्वा' निति पदेनात्र तदेव प्रतिपाद्यते ।

टि०—सा विचारासहाजातिरदृष्टत्वात्सदा पुनः ॥
व्यक्तेश्च क्षणिकत्वान्न सङ्केतो युज्यते तयोः ।

वृ०— तद्व्यक्तिभिन्ने व्यावृत्तिरित्यपोहपदार्थगः ॥
शब्दार्थस्तत्र सङ्केतो मतं क्षणिकवादिनाम् ।

अलंकार युता मानि भामहस्यात्रभारती
अन्यापोहेन शब्दार्थं माहित्यन्ये प्रचक्षते ।
अन्यापोहश्च नामान्य पदार्थायाकृतिः किल ॥
यदि गौरित्ययं शब्द कृतार्थोऽन्यनिराकृतौ ।
जनको गवि गोबुद्धेर्मृग्यतामपरो ध्वनिः ॥
अर्थज्ञानफलाः शब्दाः न चैकस्य फल द्वयम् ।
अपवाद विधिज्ञाने फले चैकस्य वः कथम् ॥
पुरा गौरिति विज्ञान गोशब्द श्रवणाद्भवेत् ।
येना गो प्रतिषेधाय प्रवृत्तो गौरिति ध्वनिः ॥
प्रकृतानुपयोगाच्च ग्रन्थगौरवभीतितः ॥
मया विस्तरतो नैतद्वर्णितंहि विजानता ।

टि०—जात्यादिषु च सङ्केतो मम्मटायापि रोचते ॥

का०-समुख्योऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते।

टि०—अधुना लक्षणा चात्र प्राप्तकाल निरूप्यते ।

का०—मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।
अन्योऽर्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया ॥

टि०—"लक्षणा शक्यसम्बन्धो" मुक्तान्यत्या निरूपितम् ।
प्रतीत्यच्युतरायोऽत्र विषये तन्निषेधते ॥
"यदुक्त शक्यसम्बन्धो लक्षणेति वदन्तिह ।
शक्यस्य स्रोतसस्तीरे सम्बन्ध स कथ नु सा ॥
यो हि लक्षकधर्मोऽसौ लक्ष्यधर्म कथम्भवेत् ।
नहि रावाकटाक्षस्य तैक्ष्ण्य कुञ्जेऽपि दृश्यते ॥

इतीव काश्चिद्वादिचेदब्रूयात्तत्र तदुत्तरम् ।
"तत्सोऽर्थगोऽपि शब्दैकान्वयादेर्लक्ष्यबोधतः ॥
आह्लादकत्ववच्छब्देऽप्यस्तीत्येव तदाशयः ।
तथा च वृद्धासिद्धान्तसुगन्धे द्राघिया मया ॥
साध्येवोक्तं पिकेनेव तद्विकासेच्छुनाधुना ।
अथारोपेण या शाब्दी शक्यसम्बद्धबोधिका ॥
तात्पर्यानुपपत्त्यैव वृत्तिः सा लक्षणोच्यते ।"

वृ०— 'कुशलः कर्मणी' त्यादौ 'कुशं लाती' ति विग्रहे ।
दर्भस्य ग्रहणायोगात्सति मुख्यार्थबाधने ।
विवेचकत्वादियोगे लोके रूढप्रसिद्धितः ॥
मुख्यार्थेन ह्यमुख्योऽर्थो लक्ष्यते येन हेतुना ।
साक्षाद्यद्यप्यर्थनिष्ठः शब्दनिष्ठोऽपि मन्यते ॥
एष शब्दस्य व्यापारो नूनमारोपितः स तु ।
लक्षणा इति शब्देन विद्वद्भिः परिचीयते ।

टि०— उदाहरणमेतन्नो कविराजाय रोचते ।
एवञ्चेच्चलनार्थाद्वै गमेर्डो प्रत्यये कृते ॥
'गच्छतीति' च गौरत्र स्थिते हि लक्षणा ध्रुवम् ।

वृ०— 'गङ्गायां घोष' इत्यादावपि ज्ञेयं तथैव च ॥
गङ्गादीनां हि घोषाद्याधारत्वासम्भवात्ततः ।

टि०— गङ्गाप्रवाहे घोषस्यासम्भवादिति सर्वथा ॥

वृ०— मुख्यार्थबाधे सामीप्यसम्बन्धेन पुनस्तथा ।
'गङ्गातटे घोष' इति प्रयोगात्तु न तादृशी ॥

पावनत्वादिधर्माणां प्रतिपत्तिर्हि यादृशी ।
लक्षणा क्रियते तस्मादलङ्कारविचक्षणैः ॥
अथ प्रयोजनवती लक्षणा प्रतिपाद्यते ।

टि०—लक्षणा द्विविधा तावत् शुद्धा गौणीति च क्रमात् ।
शुद्धा चतुर्विधा ज्ञेया पूर्वोपादानलक्षणा ।
द्वितीया च भवेदत्र तथा लक्षणलक्षणा ॥
सारोपा च तथा साध्यवसाना चेति कीर्तिता ।
गौणभेदापि सारोपा तथा साध्यवसानिका ॥
षड्विधत्व लक्षणाया वक्ष्यते कारिकात्रये ।

का०—स्वसिद्धये पराक्षेपः परार्थे स्वसमर्पणम् ॥
उपादानं लक्षणञ्चेत्युक्ता शुद्धैव सा द्विधा ।

वृ०—प्रविशन्ति यथा कुन्ता यष्टयः प्रविशन्ति च ॥
इत्यादौ स्वप्रवेशस्य सिद्ध्यर्थं कुन्तयष्टिभिः ।
आक्षिप्यन्ते हि पुरुषा स्वसंयोगिन एव ते ॥
उपादानप्रकारेण स्यादुपादानलक्षणा ।
अथ गौरनुबन्ध्योऽत्र वाक्ये च श्रुतिचोदितः ॥
जातेर्वै गोपदार्थस्य स्यात्कथं मेऽनुबन्धनम् ।
इति मुख्यार्थबाधेन लक्षणा शक्तितोऽधुना ॥
मीमांसकमते जात्या व्यक्तिराक्षिप्यते पुनः ।
न तु शब्देनोच्यतेऽत्र केनापि परमार्थतः ॥
" विशेष्यं नाभिधा गच्छेत्क्षीणशक्तिर्विशेषणे ।
इति न्यायमनुसृत्य स्यादुपादानलक्षणा ॥

एषा तु नोदाहर्तव्या न प्रयोजनमत्र वै ।
न वा रूढिरियं काचिदिति ज्ञेयं विचक्षणैः ॥

टि०—प्रयोजनं तथा रूढिं विना नेयार्थता भवेत् ।
कथं तल्लक्षणाभावे व्यक्तेर्बोधो भविष्यति ॥
यत्र जातिस्तत्र व्यक्तिरिति व्याप्तिग्रहात्ततः ।

वृ०— जात्या व्यक्त्यविनाभावाद्व्यक्तिराक्षिप्यते ध्रुवम् ॥
क्रियतामत्र कर्ता च कुर्वित्यत्र च कर्म वा ।
प्रविशेत्यत्र च गृहं पिण्डीमत्र च भक्षयेत् ॥
किञ्च पीनो देवदत्तो दिवा भुंक्ते न कर्हिचित् ।
रात्रिभोजनमत्रापि नोपादानेन लक्ष्यते ॥
तस्य श्रुतार्थापत्तेर्वार्थापत्तेर्वा तथैव च ।
विषयत्वादिति मता न चोपादानलक्षणा ॥
अनयार्थान्तरे संक्रमितवाच्योऽत्र सूच्यते ।
अजहल्लक्षणां नाम्ना केचिदेनां वदन्ति च ॥
'गंगायां घोष' इत्यत्र गङ्गाशब्दस्तटस्य च ॥
घोषाधिकरणत्वस्य सिद्धये लक्षणेन वै ॥
स्वार्थमर्पयतीत्यादौ भवेल्लक्षणलक्षणा ।

टि०—एतस्या उपयोगाश्चात्यन्तं वाच्ये तिरस्कृते ॥

वृ०— उपचारामिश्रितत्वाच्छुद्धेवेत्यभिधीयते ।

टि०—गौण्यास्तु नोपयोगः स्यादलङ्कारे ध्वनौ यतः ॥
सारोपा गौणभेदे तु लक्ष्यलक्षकयोर्द्वयोः ।

तदभेदप्रतीतिर्हि भेदेऽपि जायते ध्रुवम् ॥
भेदप्रतीतिः स्पष्टैव शुद्धभेदे तयोस्तथा ।
भेदाभेदप्रतीतिः सा गौणं शुद्धं भिनत्ति हि ॥
एवं मुकुलभट्टे च मम्मटो नानुकूलवाक् ।

वृ०— भेदयोरनयोर्नूनं लक्ष्यस्य लक्षकस्य च ।
न भेदरूपं ताटस्थ्यमिति काव्यविदां नयः ॥

टि०—यदि सत्यं भवेदेतद्भवतामपि चेत्तदा ॥

वृ०— गङ्गासम्बन्धमात्रस्य प्रतीतौ तु विचार्यताम् ।
'गङ्गातटे घोष' इति मुख्यशब्दाभिधानतः ॥
को भेदो लक्षणाया वै न वा विद्यो वयं पुनः ।

का०—सारोपान्या तु यत्रोक्तौ विषयी विषयस्तथा ।

वृ०— यदेवारोप्यमाणश्च ह्यारोपविषयस्तथा ।
अनपह्नुतभेदौ तौ यत्र यत्र कविकृतौ ॥
सामानाधिकरण्येन निर्दिश्येते यथातथम् ।
लक्षणा सा तु सारोपा 'गौर्वाहीको' यथा भवेत् ॥

टि०—सारोपा लक्षणा ज्ञेया रूपकालङ्कृतौ हिता ।

का०-विषय्यन्तःकृतेऽन्यस्मिन्सास्यात्साध्यवसानिक

वृ०— अत्र चारोप्यमाणेन नूनं विषयिणा तथा ।
निगीर्णेऽन्तः कृतेऽन्यस्मिन्नारोपाविषये सति ॥
सा तु साध्यवसानास्याद्यथा 'गौरय' मित्यपि ।

टि०—प्रथमातिशयोक्तौ च ह्युपयोग. कृतो बुधैः ॥

का०—भेदाविमौ च सादृश्यात्सम्बन्धान्तरतस्तथा ।
गौणौ शुद्धौ च विज्ञेयौ लक्षणा तेन षड्विधा ॥

वृ०— आरोपाध्यवसानौ द्वावेतौ सादृश्यहेतुकौ ।
भेदौ यथा गौर्वाहीकस्तथा गौरयमत्र च ॥
अथ 'गौर्वाहीक' इत्यादौ स्वार्थस्य सहचारिणः ॥
लक्ष्यमाणा अपि सदा जाडयमान्द्यादयो गुणाः ।
गोशब्दस्य पदार्थाभिधाने चैव कथञ्चन ।
प्रवृत्तौ तु निमित्तत्वमुपयान्तीति केचन ।

टि०—वाहीकेनैव सङ्केतो गोशब्दस्यात्र विद्यते ।
कथं स्यात्तर्हि गोशब्दः शक्तो वाहीकसूचने ॥

वृ०— अन्ये पुनर्वदन्तीत्थं स्वार्थस्य सहचारिणाम् ।
गुणानां जाडयमान्द्यानामभेदेन पदार्थगाः ।
गुणा एव हि लक्ष्यन्ते न परार्थोऽभिधीयते ।

टि०—वाहीकश्च तथा गौश्च भिन्नौ तौ च निरन्तरम् ॥
गुणावपि तयोर्भिन्नाविति वाहीकगोगतौ ।
गुणौ न साम्यं लभतः कथं तर्ह्यत्र लक्षणा ॥

वृ०— साधारणानां गुणानामाश्रयेण च केवलम् ।
परार्थो लक्ष्यते नूनमित्येतदपरे जगुः ॥

टि०—इदमेव मतं श्रीमन्मम्मटायापि रोचते ।
तथा चोक्तं प्रमाणञ्च यथा स्वमतपोषणे ॥

वृ०— "मानान्तरविरुद्धे तु मुख्यार्थस्य परिग्रहे ।
अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते ।
लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता ॥"
नूनमत्राविनाभावो नान्तरीयकता तु न ।
सम्बन्धमात्रं विज्ञेयः इत्यलङ्कारनिश्चयः ॥
तथात्वे लक्षणा न स्यान्मञ्चाश्चुक्रुशुरत्र वै ।
आक्षेपेणाविनाभावे सिद्धे कार्ये कथञ्चन ॥
लक्षणाया नोपयोग इत्युक्तं पूर्वमेव हि ।
आयुर्घृतमायुरिदमत्र सादृश्यतोऽपरम् ॥
कार्यकारणभावादि सम्बन्धान्तरमिष्यते ।
एवमादौ च सादृश्यादन्यः सम्बन्ध एव सः ॥
कार्यकारणभावादिरिह सम्बन्धपूर्वके ।
आरोपाध्यवसाने ते मते काव्यविचक्षणैः ॥
तद्रूपताप्रतीतिर्हि भेदेऽपि गौणभेदयोः ।
अभेदावगमश्चैव सर्वथात्र प्रयोजनम् ॥
अन्ये वा व्यभिचारेण वैलक्षण्येन वा पुनः ।
शुद्धाया भेदयोः कार्यकारित्वादि प्रयोजनम् ॥
स्थूणेन्द्रार्येन्द्र इत्यादौ तादर्थ्यादौपचारिकी ।
स्वस्वामिभावसम्बन्धाद्राजकीयः पुमान्नृपः ॥
हस्ताग्रमात्रेऽग्रहस्तोऽवयवावयवित्वतः ।

अतक्षापि तथा तक्षा तात्कर्म्याद्भिधीयते ॥
इत्थं सम्बन्धान्तराण्याहुरनेकानि बुधोत्तमैः ।

टि०—चतुर्थातिशयोक्तौ तु शुद्धसारोपलक्षणा ॥
योग्या साध्यवसाना च काव्यलिङ्गनिरूपणे ।
इत्यश्च लक्षणाभेदाः षडेव प्रतिपादिताः ॥
श्रीमान्मुकुलभट्टोऽत्र मीमांसकशिरोमणिः ।
इमां च शुद्धां सारोपां शुद्धां साध्यवसानिकाम् ॥
मत्वोपचारमिश्रांश्च षड्विधां प्रत्यपादयत् ।
अग्रहीन्नैव नामापि परं रूढेः कथञ्चन ॥
मन्ये मम्मटभट्टेन मतमेतन्मतं ध्रुवम् ।
अन्यथा षड्विधास्थाने सप्तधा परिकीर्तयेत् ॥
विश्वनाथमते नूनं लक्षणाशीतिधा मता ।
रूढेः प्रयोजनाद्वापि प्रथमं द्विविधा भवेत् ॥
उपादानं लक्षणञ्चेत्युक्ता सापि द्विधा पुनः ।
आरोपाध्यवसानाभ्यां प्रत्येकं ता अपि द्विधा ॥
सादृश्येतरसम्बन्धाः शुद्धास्ताः सकला अपि ।
सादृश्यात्तु मत्ता गौण्यस्तेन षोडशभेदिता ॥
व्यङ्ग्यस्य गूढागूढत्वात्प्रयोजनवती द्विधा ।
धर्मिधर्मगतत्वेन फलस्यैता अपि द्विधा ॥
रूढावष्ट प्रकारा च द्वात्रिंशद्वा प्रयोजने ।
योजने लक्षणाभेदाश्चत्वारिंशन्मता बुधैः ॥

पदवाक्यगत्वत्वेन प्रत्येकं ता अपि द्विधा ।
तदशीतिविधा दृष्टा लक्षणा दर्पणे मया ॥
प्रसारितेऽपि वाग्जाले कविराजेन धीमता ।
ध्वनौ तथैवालङ्कारे नोपयोगः प्रदर्शितः ॥
शुद्धा गौणीति भेदेन निरूढा द्विविधां तथा ।
स्वीकृत्य चैकामधिकां भागत्यागाभिधामपि ॥
नामान्तरेणैव चान्या ऊरीकृत्य षडेव ताः ।
प्रोक्तैवं नयधाप्पय्यदीक्षितेनापि लक्षणा ॥
प्राच्यानां मतमुद्धृत्य स्वकञ्च प्रकटीकृतम् ।
सारोपाध्यवसाना च शुद्धात्वन्तर्भवेद्ध्रुवम् ॥
जहत्स्वार्थालक्षणायां निरूढापि तथैव च ।
तथा पण्डितराजस्तु लक्षणाविषये पुनः ॥
अनुकूलोऽभवत्तत्र श्रीमदप्पयदीक्षिते ।
जहत्स्वार्थाजहत्स्वार्थे जहदजहती तथा ॥
एवं द्विरेफ इत्यादावपि लक्षितलक्षणा ।
इति गौणीं विभज्यात्र नागेशोऽग्रे जगौ पुनः ॥
शुद्धा चैवाभिधाया वै द्वितीयं नाम उच्यते ।
नैयायिकमत चैतन्मह्यन्तु नैव रोचते ॥
यतश्च "सति तात्पर्ये सर्वे सर्वार्थवाचकाः ।"
तथाच लक्षणाशक्तेरत्रैव गतार्थता ॥
'शब्देऽथ वैयाकरणैर्द्वेशक्ती समुदीरिते ।

प्रसिद्धा चाप्रसिद्धा च प्रसिद्धा सर्वगोचरा ॥
अप्रसिद्धा च विज्ञेया सदा सज्जनगोचरा ।
अतएवाभिधाशक्त्या लक्षणाया गतार्थता ॥
एवमेवं कार्यसिद्धिः स्यादेवं लाघवन्तथा ।
गौणी शुद्धा विरुद्धा च तथा लक्षितलक्षणा ॥
चतुर्धासौ निरूढेति प्रयोजनवतीति च ।
प्रत्येकं द्विविधा प्रोक्ता ततश्चैवाष्टधाभवत् ॥
प्रयोजनवती गौणी शुद्धा चापि पुनर्द्विधा ।
आरोपाध्यवसानाभ्यां चतुर्धा साभवत्ततः
शुद्धा प्रयोजनवती जहत्यजहती मता ।
जहदजहती चासौ भागत्यागापि कथ्यते ॥
अथ प्रयोजनवती विरुद्धा धन्य एव सः ।
प्रयोजनवती तद्वदेषा लक्षितलक्षणा ॥
वैदेहीमवलोक्यैव स्तब्धोऽभूद्रघुनन्दनः ।
एवञ्च गौणी त्रिविधा शुद्धा पञ्चविधा मता ॥
द्विधा विरुद्धा विज्ञेया द्विधा लक्षितलक्षणा ।
संयोजिते द्वादशधा ह्यच्युतस्य मते पुनः ॥
मतान्येतावदुद्धृत्य साम्प्रतं हि विचार्यते ।
निरूढां तत्प्रभेदांश्च प्रदृश्यापि न केनचित् ॥
उपयोगो ध्वनेर्भेदे ह्यलङ्कारे ऽथवा कृतः ।
एतेन ज्ञायते नूनं नैषा कार्यकरी क्वचित् ॥

यथा 'प्रयोजनाभावे शक्यसम्बन्ध' एव सा ।
निरूढालक्षणेत्युक्त्वा नागेशो ऽप्रथयन्मतम् ॥
'शक्तेरपरपर्यायो निरूढेयमिति स्फुटम् ।
गूढागूढव्यङ्ग्यभेदान् धर्मिधर्मगतांस्तथा ॥
पदवाक्यवताश्चैव सर्वान् भेदानपास्य तान् ।
मुख्यतः कविराजस्य शिष्टा षोडशलक्षणा ॥
तत्रापि रूढिभेदास्तु गता नागेशवाक्यतः ।
मम्मट क्रममाश्रित्य भेदनीतिप्रसारणे ॥
षोढैव लक्षणा ज्ञेया नात्र क्वापि विचारणा ।
उपादानं लक्षणञ्चेत्युक्ता शुद्धैव सा द्विधा ॥
आरोपाध्यवसाना च शुद्धा गौणी चतुर्विधा ।
निरूढाद्युत्तरायस्य गतैव कविराजवत् ॥
भागत्यागा विरुद्धा च तथा लक्षितलक्षणा ।
जहत्स्वार्थालक्षणाया मन्तर्भवितुमर्हति ॥
शुद्धा गौणी निरूढापि जहदजहती तथा ।
नष्टावान्तर्गता वापि तास्तु दीक्षितदीक्षिताः ॥

**का०—व्यङ्ग्येन रहिता रूढौ सहिता तु प्रयोजने ।**

**वृ०— प्रयोजनन्तु ध्वननव्यापारगम्यमेव च ।**

**का०—तच्च गूढमगूढं वा—**

टि०— यथा गूढ मुदाहृतम् ॥

०— मुखं विकसितस्मितं वशितवक्रिमप्रेक्षितम्,
समुच्छलितविभ्रमा गतिरपास्तसंस्थामतिः ।
उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरम्,
बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ॥

टि०— विकासः पुष्पधर्मोऽत्र मन्दहासे हि बाधितः ।
प्रसन्नत्वं लक्षयन्स व्यनक्ति रामणीयकम् ॥
तच्च सहृदयस्यैव नान्यस्य बुद्धिगोचरम् ।
इत्याद्यूह्यं प्रयत्नेन वशितादिपदेष्वपि ॥
अगूढस्यापि व्यङ्ग्यस्य व्यक्तोदाहरणं यथा ।

वृ०— श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानाम् ।
उपदिशति कामिनीनां यौवनमद एव ललितानि ॥
अत्रोपादिशतीत्यादावनायासेन वै पुनः ।
अभिधेयस्येव सुस्पष्टं शिक्षादानं प्रतीयते ॥

टि०—किन्तु गूढागूढवद्धि काव्यमत्र प्रशस्यते ।
कुचद्वन्द्वं किरेत्कान्तिमर्धोद्घाटितमेव तत् ॥

**भेदसंख्यायोजनेन**

**का०— तदेषा कथिता त्रिधा ।**

**वृ०— अव्यङ्ग्यागूढव्यङ्ग्या च गूढव्यङ्ग्येति नामतः ॥**

टि०— अव्यङ्ग्या लक्षणा ज्ञेया रूढिः पूर्वं प्रदर्शिता ।
षोढा प्रयोजनवती गूढागूढप्रभेदतः ॥

जाता द्वादशधा तत्र धर्मिधर्मगतास्तथा ।
पदवाक्यगताश्चैव भेदाः स्युः स्वीकृता यदि ॥
चत्वारिंशत्तथाष्टौ च मेदा दर्पणवत्तदा ।
किन्त्वेतेषां नोपयोगः कुत्रापि च विलोक्यते ॥

का०—तद्भूर्लाक्षणिकः—

वृ०— , , शब्दो लक्षणाया य आश्रयः ।

टि०—अधुना च क्रमप्राप्ता व्यञ्जना वै निरूप्यते ॥
शब्दनिष्ठार्थनिष्ठा च सा द्वेधा परिकीर्तिता ।
विवेचनीयार्थनिष्ठा तृतीयोल्लासके पुनः ॥
द्विविधा शब्दनिष्ठापि मतात्र विबुधोत्तमैः ।
विज्ञेयाद्याभिधामूला लक्षणामूलका परा ॥
यद्यप्यत्राभिधामूला लक्षणीया प्रधानतः ।
प्राथम्यादुपजीव्यत्वादिति काव्यविदो विदुः ॥
प्रसिद्धत्वात्प्रकृतत्वाल्लक्षणायास्तथापि च ।
प्रथमं लक्षणामूला व्यञ्जनैव निरूप्यते ॥
शब्दो लाक्षणिके—

का०— तत्र व्यापारो व्यञ्जनात्मकः ।

यथोपपादि 'गङ्गायां घोष' इत्यत्र तीरगे ॥
पावनत्वेऽपि तज्ज्ञप्त्यै लक्षणैवेति लाघवात् ।

का०—यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते ।
फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया ॥

वृ०— यस्याथ पावनत्वादिर्धर्मस्यात्र प्रतीतये ।
लाक्षणिकस्य शब्दस्य प्रयोगः क्रियते बुधैः ॥
शब्दात्तस्मादेव भवेत्तत्प्रतीतिर्न चान्यतः ।
तथा च नान्यो व्यापारः केवलं व्यञ्जनादृते ॥

**का०—नाभिधा समयाभावात्—**

टि०— व्यङ्ग्यज्ञानं तया कथम् ।

वृ०— 'गङ्गायां घोष' इत्यादौ धर्माः पावनतादयः ॥
ये तटादौ प्रतीयन्ते तत्र गङ्गादयः पुनः ।
शब्दाः सङ्केतिता नैव तत्प्रतीतिः कथं भवेत् ।

टि०—विचारयन्तु मनसि—

**का०— हेत्वभावान्न लक्षणा ॥**

टि०—मुख्यार्थबाधस्तद्योगो रूढिर्वाथ प्रयोजनम् ।
इत्येतत्त्रितयं हेतुर्लक्षणाया निरूपितः ॥
तदभावोऽत्र विज्ञेय एतदेवोपपाद्यते ।

**का०—लक्ष्यं न मुख्यं नाप्यत्र बाधो योगः फलेन नो ॥**
**न प्रयोजनमेतस्मिन्न च शब्दः स्खलद्गतिः ॥**

वृ०— यथैव गङ्गाशब्दोऽत्र सबाधः स्रोतसि स्मृतः ।
ततस्तटं लक्षयति तथैवात्र तटेऽपि सः ॥
सबाधः स्यात्तदा सोऽपि लक्षयेद्धि प्रयोजनम् ।
तटमत्र न मुख्योऽर्थो नापि बाधोऽवलोक्यते ॥

गङ्गाशब्दार्थभूतस्य तटस्यापि न कर्हिचित् ।
पूतत्वाद्यैर्लक्षणीयैः सम्बन्धश्चापि विद्यते ॥
नापि प्रयोजने लक्ष्ये किञ्चिदस्ति प्रयोजनम् ॥
गङ्गाशब्दस्तटमिव न तथात्र प्रयोजनम् ॥
प्रतिपादयितुञ्चापि ह्यसमर्थः कदाचन ।

का०—एवमप्यनवस्था स्याद्या मूलक्षयकारिणी ।

सू०— प्रयोजनं लक्ष्यते चेदेवमेव कथञ्चन ॥
प्रयोजनान्तरेणैव तदा तदपि लक्ष्यते ।
प्रयोजनान्तरेणैवं लक्ष्यते तदपि क्रमात् ॥
अनवस्था भवेदेवं प्रकृते त्वप्रतीतिकृत् ।

टि०—"मूलक्षयकरीमाहुरनवस्था हि दूषणम् ॥

सू०— पावनत्वादिधर्मेण युक्तं हि लक्ष्यते तटम् ।
त 'ङ्गायास्तटे घोष' इत्यस्मादधिकस्य च ॥
अर्थस्य प्रतिपत्तिर्हि प्रयोजनमिदं स्मृतम् ।
अतश्च पावनत्वादि विशिष्ट एव लक्षणा ॥
तत्किं व्यञ्जनये त्याह कश्चिदत्र तदुत्तरम् ।

का०—प्रयोजनेन सहितं लक्षणीयं न युज्यते ।
ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम् ॥

सू०— प्रत्यक्षादिप्रमाणस्य नीलादिर्विषयो मतः ।
फलं प्रकटता वापि संवित्तिर्वेति निर्णयः ॥

टि०—भट्टमीमांसकमते प्रत्यक्षे सति वस्तुनः ।
जायते ज्ञाततोत्पत्तिः प्रत्यक्षस्य फलं हि या ॥
नैयायिकमतेऽप्येवं प्रत्यक्षस्य ह्यनन्तरम् ।
संवित्तिर्जायते चेयं प्रत्यक्षस्य फलं स्मृता ॥
यमनुव्यवसायं च कथयन्ति विपश्चितः ।
अनन्तरमिमे नूनं भवेतां नैव संशयः ॥
( संवित्तिरात्मधर्मोसौ वस्तुधर्मश्च ज्ञातता । )
विषयश्च फलञ्चैव भिन्नावेव परस्परम् ॥
गङ्गातटोऽत्र विषयः फलं पावनता तथा ।
भिन्नौ द्वावपि विज्ञेयौ मिलितौ नैव कर्हिचित् ॥

**का०—विशिष्टे लक्षणा नैवं विशेषाः स्युस्तु**

**वृ०—लक्षिते हि तटादौ ये पावनत्वादयो मताः ।**
**विशेषास्ते बुद्धिगम्या व्यापारान्तरतो ध्रुवम् ।**
**अभिधालक्षणादिभ्यो न प्रतीतिपथं व्रजेत् ।**
**ध्वननं व्यञ्जनं चैव द्योतनञ्चाभिधीयते ।**

टि०—उक्तमेवं व्यञ्जनकत्वे लक्षणामूलमेव तत् ।
इदानीमाभिधामूल व्यञ्जकत्वं निरूप्यते ।

**का०—अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।**
**संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम् ॥**

**वृ०—संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।**
**अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥**

गङ्गाशब्दार्थभूतस्य तटस्यापि न कर्हिचित् ।
पूतत्वाद्यैर्लक्षणीयैः सम्बन्धश्चापि विद्यते ॥
नापि प्रयोजने लक्ष्ये किञ्चिदस्ति प्रयोजनम् ॥
गङ्गाशब्दस्तटमिव न तथात्र प्रयोजनम् ॥
प्रतिपादयितुञ्चापि ह्यसमर्थः कदाचन ।

का०–एवमप्यनवस्था स्याद्या मूलक्षयकारिणी ।

सू०– प्रयोजनं लक्ष्यते चेदेवमेव कथञ्चन ॥
प्रयोजनान्तरेणैव तदा तदपि लक्ष्यते ।
प्रयोजनान्तरेणैवं लक्ष्यते तदपि क्रमात् ॥
अनवस्था भवेदेवं प्रकृते स्वप्रतीतिकृत् ।

टि०–"मूलक्षयकरीश्चाहुरनवस्था हि दूषणम् ॥

सू०– पावनत्वादिधर्मेण युक्तं हि लक्ष्यते तटम् ।
न 'गङ्गायास्तटे घोष' इत्यस्मादधिकस्य च ॥
अर्थस्य प्रतिपत्तिर्हि प्रयोजनमिदं स्मृतम् ।
अतश्च पावनत्वादि विशिष्ट एव लक्षणा ॥
तत्किं व्यञ्जनये त्याह कश्चिदत्र तदुत्तरम् ।

का०–प्रयोजनेन सहितं लक्षणीयं न युज्यते ।
ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम् ॥

सू०– प्रत्यक्षादिप्रमाणस्य नीलादिर्विषयो मतः ।
फलं प्रकटता वापि संविचिर्वेति निर्णयः ॥

टि०— भट्टमीमांसकमते प्रत्यक्षे सति वस्तुनः।
जायते ज्ञाततोत्पत्तिः प्रत्यक्षस्य फलं हि या॥
नैयायिकमतेऽप्येवं प्रत्यक्षस्य ह्यनन्तरम्।
संवित्तिर्जायते चेयं प्रत्यक्षस्य फलं स्मृता॥
यमनुव्यवसायं च कथयन्ति विपश्चितः।
अनन्तरमिमे नूनं भवेतां नैव संशयः॥
( संवित्तिरात्मधर्मोऽसौ वस्तुधर्मश्च ज्ञातता। )
विषयश्च फलञ्चैव भिन्नावेव परस्परम्॥
गङ्गातटोऽत्र विषयः फलं पावनता तथा।
भिन्नौ द्वावपि विज्ञेयौ मिलितौ नैव कर्हिचित्॥

**का०— विशिष्टे लक्षणा नैवं विशेषाः स्युस्तु ल०—**

**वृ०— लक्षिते हि तटादौ ये पावनत्वादयो मताः।**
**विशेषास्ते बुद्धिगम्या व्यापारान्तरतो ध्रुवम्॥**
**अभिधालक्षणादिभ्यो न प्रतीतिपथं व्रजेत्।**
**ध्वननं व्यञ्जनं चैव द्योतनञ्चाभिधीयते।**

टि०— उक्तमेवं व्यञ्जनकत्वे लक्षणामूलमेव तत्।
इदानीमभिधामूल व्यञ्जकत्वं निरूप्यते।

**का०— अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।**
**संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम्॥**

**वृ०— संयोगो विप्रयोगश्च साहचर्यं विरोधिता।**
**अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥**

सामर्थ्यमौचिती देशकालौ व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः।
हरिः सशंखचक्रोऽत्र संयोगाद्विष्णुरुच्यते॥
अशंखचक्रोऽथ हरिरित्येन्द्रः स्याद्वियोगतः।
श्रीरामलक्ष्मणौ साहचर्याद्दाशरथी स्मृतौ।
रामार्जुनगतिस्तत्र विरोधाद्भार्गवो भवेत्॥

टि०—एतदन्योन्याश्रयत्वाद्दीक्षिताय न रोचते।
तदुदाहरणं देयं रामरावणयोरिव॥

सू०— शम्भुः प्रयोजनादत्र स्थाणुं भज भवाच्छिदे।
सर्वं जानाति देवोऽत्र त्वं वै प्रकरणात्स्मृतः॥
कामोऽत्र लिङ्गतो ज्ञेयः कुपितो मकरध्वजः।
देवस्य त्रिपुराराते: शिवोऽन्यशब्दसन्निधेः॥
मधुना कोकिलो मत्तः सामर्थ्याद्धि वसन्तकः।
साम्मुख्यमत्र विज्ञेयः पातु वो दयितामुखम्॥
देशाद्राजति वक्तव्यो भात्यत्र परमेश्वरः॥
चित्रभानुर्विभात्यत्र दिवार्को निशि पावकः॥
मित्रं भातीत्यत्र सुहृद्द्व्यक्त्या मित्रः प्रभाकरः
यथेन्द्रशत्रुरित्यादौ वेदे एव विशेषतः।
किन्तु काव्ये स्वरो नैव सुविशेषप्रतीतिकृत्।

टि०—बहुव्रीहिस्तत्पुरुषः समासौ द्वावुदीरितौ।
'इन्द्रः शत्रुर्यस्य' चेति बहुव्रीहौ पुनर्भवेत्॥

"बहुव्रीहौ प्रकृत्ये" ति सूत्रेणेन्द्र उदात्तता ।
प्राधान्यन्तेन चेन्द्रस्य शत्रुरित्यस्य गौणता ॥
'इन्द्रस्य शत्रु' रित्येवं तावत्तत्पुरुषे कृते ।
"समासस्ये" ति सूत्रेण शत्रुशब्द उदात्तता ॥
तेन शत्रोस्तु प्राधान्यं तथेन्द्रस्य च गौणता ।
इत्यादि विषयो वेदे काव्ये नैव कदाचन ॥
यदुक्तं नाट्यशास्त्रे च मुनिना भरतेन तु ।
" हास्यशृङ्गारयोः कार्यौ स्वरौ मध्यमपञ्चमौ ॥
षड्जर्षभौ तथा चैव वीररौद्राद्भुतेषु च ।
गान्धारश्च निषादश्च कर्तव्यौ करुणे रसे ॥
धैवतश्चैव कर्तव्यो वीभत्से सभयानके ।
अतः स्वरोदाहरणं देयमेव न संशयः ॥
काकूदात्तादयः किन्तु स्वराः केवलमेव ते
विशेषयन्ति व्यङ्ग्यार्थं नानेकार्थनियामकाः ॥
तथा साति तु श्लेषस्य स्थानमेव न सम्भवेत् ।
एतत्तु कविराजेन ह्युक्तं साहित्यदर्पणे ॥

सू०– अत्रादिग्रहणाच्चैव गृह्यन्तेऽभिनयादयः ।
एद्दहमेत्तत्थणिआ एद्दहमेत्तेहिं अच्छिवत्ते हिं ।
एद्दहमेत्तावत्था एद्दहमेत्ते हिं दिअएहिं ॥
अर्थान्तराभिधायित्वे संयोगादिभिरेव वै ।
इत्थं निवारितेऽपि स्यात्क्वाचिद्यत्काव्यवर्णने ॥

सामर्थ्यमौचिती देशकालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः।
हरिः सशंखचक्रोऽत्र संयोगाद्विष्णुरुच्यते॥
अशंखचक्रोऽथ हरिरित्यैन्द्रः स्याद्वियोगतः।
श्रीरामलक्ष्मणौ साहचर्याद्दाशरथौ स्मृतौ।
रामार्जुनगतिस्तत्र विरोधाद्भार्गवो भवेत्॥

टि०—एतदन्योन्याश्रयत्वाद्दीक्षिताय न रोचते।
तदुदाहरणं देयं रामरावणयोरिव॥

सू०— शम्भुः प्रयोजनादत्र स्थाणुं भज भवच्छिदे।
सर्वं जानाति देवोऽत्र त्वं वै प्रकरणात्स्मृतः॥
कामोऽत्र लिङ्गतो ज्ञेयः कुपितो मकरध्वजः।
देवस्य त्रिपुरारातेः शिवोऽन्यशब्दसन्निधेः॥
मधुना कोकिलो मत्तः सामर्थ्याद्धि वसन्तकः।
साम्मुख्यमत्र विज्ञेयः पातु वो दयितामुखम्॥
देशाद्राजति वक्तव्यो भात्यत्र परमेश्वरः॥
चित्रभानुर्विभात्यत्र दिवार्को निशि पावकः॥
मित्रं भातीत्यत्र सुहृद्व्यक्त्या मित्रः प्रभाकरः
यथेन्द्रशत्रुरित्यादौ वेदे एव विशेषतः।
किन्तु काव्ये स्वरो नैव सुविशेषप्रतीतिकृत्।

टि०—बहुव्रीहिस्तत्पुरुषः समासौ द्वावुदीरितौ।
'इन्द्रः शत्रुर्यस्य' चेति बहुव्रीहौ पुनर्भवेत्॥

"बहुव्रीहौ प्रकृत्ये" ति सूत्रेणेन्द्र उदात्तता ।
प्राधान्यन्तेन चेन्द्रस्य शत्रुरित्यस्य गौणता ॥
'इन्द्रस्य शत्रु' रित्येवं तावत्तत्पुरुषे कृते ।
"समासस्ये" ति सूत्रेण शत्रुशब्द उदात्तता ॥
तेन शत्रोस्तु प्राधान्यं तथेन्द्रस्य च गौणता ।
इत्यादि विषयो वेदे काव्ये नैव कदाचन ॥
यदुक्तं नाट्यशास्त्रे च मुनिना भरतेन तु ।
" हास्यशृङ्गारयोः कार्यौ स्वरौ मध्यमपञ्चमौ ॥
षड्जर्षभौ तथा चैव वीररौद्राद्भुतेषु च ।
गान्धारश्च निषादश्च कर्तव्यौ करुणे रसे ॥
धैवतश्चैव कर्तव्यो बीभत्से सभयानके ।
अतः स्वरोदाहरणं देयमेव न संशयः ॥
काकूदात्तादयः किन्तु स्वराः केवलमेव ते
विशेषयन्ति व्यङ्ग्यार्थं नानेकार्थनियामकाः ॥
तथा सति तु श्लेषस्य स्थानमेव न सम्भवेत् ।
एतत्तु कविराजेन ह्युक्तं साहित्यदर्पणे ॥

सू०– अत्रादिग्रहणाच्चैव गृह्यन्तेऽभिनयादयः ।
एद्दहमेत्तत्थणिआ एद्दहमेत्तेहि अच्छिवत्ते हि ।
एद्दहमेत्तावत्था एद्दहमेत्ते हि दिअएहि ॥
अर्थान्तराभिधायित्वे संयोगादिभिरेव वै ।
इत्थं निवारितेऽपि स्यात्क्वचिद्यत्काव्यवर्णने ॥

अनेकार्थस्य शब्दस्यार्थान्तर प्रतिपादनम् ।
अभिधा नैव तत्रस्यात्तस्या नियमनात्पुनः ॥
मुख्यार्थबाधाद्यभावात्तथैव नापि लक्षणा ।
किन्त्वत्र सर्वदा ज्ञेयो व्यापारो व्यञ्जनात्मकः ॥
अत्र शाब्द्यभिधामूला व्यञ्जनोदाहृता यथा ।
भद्रात्मनो दुरधिरोहतनोर्विशाल–
वंशोन्नतेः कृतशिलीमुखसंग्रहस्य ।
यस्यानुपप्लवगतेः परवारणस्य,
दानाम्बुसेकसुभगः सततं करोऽभूत् ॥

टि०—अत्र प्रतीयमानस्तु करी वाच्यो नृपः स्मृतः ।
श्लेष वदन्ति केचिन्न नोचितं तत्तु विद्यते ॥
तुल्याश्चेत् यदा वाच्यौ तदा श्लेषस्य सम्भवः ।

का०—तद्युक्तोव्यञ्जकः शब्दो यत्सोऽर्थान्तरयुक् तथ
अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः ॥

# काव्य-प्रकाशः ।

## तृतीय उल्लासः ।

का०—अर्थाः प्रोक्ता पुरा तेषा-

टि०—मुल्लासे वै द्वितीयके ।

वृ०— वाचकस्याथ वाच्यार्थो लक्ष्यो लाक्षणिकस्य च ॥
व्यङ्ग्योऽर्थो व्यञ्जकस्यापि ह्यर्था एते प्रकीर्तिताः ।

टि०— तृतीयकेऽधुना नून-

का०— मर्थव्यञ्जकतोच्यते ॥
वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः ।
प्रस्तावदेशकालादेर्वैशिष्ट्यात्प्रतिभाजुषाम् ॥
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा ॥

वृ०— अइपिहुलं जलकुंभं घेत्तूण समागदाम्हि सहि तुरिअम् ।
समसेअसलिलणीसासणीसहा विसमामि खणम् ॥
व्यज्यते वक्तृवैशिष्ट्यात्तच्चौर्यरतगोपनम् ।
ओणिद्दं दौब्बल्लं चिंता अलसत्तणं सणीससिअम् ।
महमंदभाइणीकेरं सहि तुहपि अहह परिहवई ॥
अत्र बोद्धव्यवैशिष्ट्यात्सह तत्कामुकेन वै ।
प्रेषितायाः दूतिकाया उपभोगो हि व्यज्यते ॥

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां,
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं,
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥
योग्यं मयि न मात्सर्यं योग्यं कुरुषु केवलम्।
व्यज्यते काकुवैशिष्ट्यात्तुर्ये पादे प्रतिष्ठितात् ॥

टि०—यावन्न व्यङ्ग्यनिष्पत्तिर्वाच्योऽर्थो न प्रतीतिकृत्।

सू०—तथा च काकुव्यङ्ग्येन वाच्यसिद्धिर्हि शोभना ॥
अतस्तद्वाच्यसिद्ध्यङ्गं गुणीभूतमिदं पुनः।
न शङ्क्यं प्रश्नमात्रेण काकोर्विश्रान्तितो यतः ॥

टि०—यत्र काकुं विना नैव व्यङ्ग्यार्थो व्यज्यते क्वचित्।
तत्र व्यङ्ग्यं गुणीभूतं न तथात्र विलोक्यते ॥

सू०—तहआमह गंडत्थल णिमिअं दिट्ठिं ण णेसि अण्णत्त
एण्हि सच्चेअ अहं ते अ कवोला ण सा दिट्ठि ॥
पश्यतस्ते मम सखि कपोलप्रतिबिम्बिताम्।
अभूदन्यादृशी दृष्टिरधुना च प्रियंवद ॥
तस्यां हि चलितायान्तु जातान्यैवेत्यहो इति।
प्रच्छन्नकामुकत्वन्ते व्यज्यते कार्यतः स्फुटम् ॥
नायिकावाच्यवैशिष्ट्याद्व्यज्यते व्यङ्ग्यमद्भुतम्।
उद्देशोऽयं सरसकदलीश्रेणिशोभातिशायी,
कुञ्जोत्कर्षाङ्कुरितरमणीविभ्रमो नर्मदायाः।

किञ्चैतस्मिन्सुरतसुहृदस्तन्वि ते वान्ति वाताः,
येषामग्रे सरति कलिकाकाण्डकोपो मनोभूः ॥
व्यक्तोऽत्र वाच्यवैशिष्ट्याद्रतार्थं प्रविशेति च ।
णोल्लेइ अणद्दमणा अत्ता म्हं घरभरम्हि सअलम्हि ।
खणमेत्तं जइ संभाइ होइ ण व होइ विसामो ॥
सन्ध्यासङ्केतकालोऽयं तटस्थम्प्रति दुःस्थया ।
कयाचिदन्यसान्निध्यवैशिष्ट्याद्द्योत्यते ध्रुवम् ॥
सुव्वइ समागमिस्सदि तुज्झ पिओ अज्ज पहरमेत्तेण ।
एमेअ कित्ति चिट्ठसि ता सहि सज्जेसु करणिज्जम् ॥
अभिसर्त्तुश्चोपपतिं प्रस्तुतापि निवार्यते ।
कयाचिद्व्यङ्ग्यमेतत्तु स्यात्प्रस्तावविशेषतः ॥
अन्यत्र यूयं कुसुमावचायं,
कुरुध्वमत्रास्मि करोमि सख्यः ।
नाहं हि दूरं भ्रमितुं समर्था,
प्रसीदतायं रचितोऽञ्जलिर्वः ॥
विविक्तोऽयं देश इति त्वया प्रच्छन्नकामुकः ।
इहाभिसार्यतामित्थ माश्वस्ताम्प्रति चोच्यते ॥
व्यज्यते व्यङ्ग्यमित्येतद्देशवैशिष्ट्यतः स्फुटम् ।
गुरुअण परवस पिअ किं भणामि तुह मंदभाइणी अहकम् ।
अज्ज पवासं वज्जासिवच्च सअं जेव्व सुणासि करणिज्जम् ॥
अत्राद्य मधुमासे चेद्व्रजासि त्वं कदाचन ।
तदाहं न भविष्यामि तवावस्थान्तु वेद्मि नो ॥

चेष्टादेरादिशब्दस्य ग्रहणादेव तद्यथा ।
द्वारोपान्तनिरन्तरे मयि तया सौन्दर्यसारश्रिया,
प्रोल्लास्योरुयुगं परस्परसमासक्तं समासादितम् ।
आनीतम्पुरतः शिरोऽशुकमधः क्षिप्ते चले लोचने,
वाचस्तत्र निवारितं प्रसरणं सङ्कोचिते दोर्लते ॥
तथात्र चेष्टयाकूतविशेषो ध्वन्यते खलु ।
प्रच्छन्नकान्तविषये प्रोल्लास्येत्यादिना क्रमात् ॥
उदाहृतेषु पद्येषु तथोदाहरणान्तरम् ।
यथायथं सम्भवति तथाप्यत्र विशेषितम् ॥
व्यञ्जनाविषये नूनं निराकाङ्क्षत्वमाप्तये ।
तत्प्राप्तावसरत्वेन तथोदाह्रियते पुनः ॥
मिथो वक्त्रादिसंयोगे द्विकादीनां क्रमेण च ।
व्यञ्जकत्वमुदाहार्यं तथैव लक्ष्यव्यङ्ग्ययोः ॥
वक्तृबोद्धव्ययोर्योगे द्विकभेद उदाहृतम् ।
अत्ता एत्थ णिमज्जइ एत्थ अहं दिअहए पलोएहि ।
मा पहिअ रत्ति अंधिअ सेज्जाइ मह णिमज्जाहिसि ॥
वक्तृबोद्धव्यवैशिष्ट्याच्छय्यायामात्मनः पतेः ।
नायिका नायकं वक्ति ह्येतदेवात्र व्यज्यते ॥

का०—शब्दप्रमाणवेद्योऽर्थो व्यनक्त्यर्थान्तरं यतः ।
अर्थस्य व्यञ्जकत्वे तच्छब्दस्य सहकारिता ॥

वृ०—प्रमाणान्तरवेद्योऽर्थो व्यञ्जको न कदाचन ।

# काव्य-प्रकाशः ।

## चतुर्थ उल्लासः ।

।०— शब्दार्थयोः प्रथमतः कृते यद्यपि निर्णये ।
दोषाणाञ्च गुणानाञ्चालङ्काराणान्तथैव च ॥
स्वरूपमभिधानीयं प्राप्तावसरमप्यदः ।
तथापि काव्ये प्रथमं धर्मिण्यत्र प्रदर्शिते ॥
ज्ञायेत चैव धर्माणां हेयोपादेयता पुनः ।

टि०—यथा श्रुतिकटुत्वस्य शृङ्गारादौ तु हेयता ॥
रौद्रादौ चित्रभेदे वा तथोपादेयता मता ।
शृङ्गारादावुपादेयो माधुर्यादिर्गुणः स्मृतः ॥
रौद्रादौ चानुपादेय इति काव्यविदां नयः ।
अलङ्कारोऽनुपादेयो यमकादी रसध्वनौ ॥
उपादेयाश्चित्रभेदे व्यवस्थैषा कृता बुधैः ।
इत्यस्मात्कारणादेव काव्यभेदान् ब्रुवेऽधुना ॥
काव्यं ध्वनिर्गुणीभूतव्यङ्ग्यं चित्रमिति त्रिधा ।
नवमे दशमे चित्रं गुणीभूतञ्च पञ्चमे ॥
प्रदर्शयिष्यते नूनं ध्वनिरत्र निरूप्यते ।
वाच्यातिशायिनि व्यङ्ग्ये ध्वनिः स काव्यजीवितम् ।

भेदावुदीरितौ तस्य द्वावेव काव्यसूरिभिः।
अविवक्षितवाच्यो यो लक्षणामूलक सदा॥
विवक्षितान्यवाच्योऽपि ह्यभिधामूलको भवेत्।

का०—**अविवक्षितवाच्यो यस्तत्र वाच्यं भवेद्ध्वनौ॥**
**अर्थान्तरे सङ्क्रमितमत्यन्तं वा तिरस्कृतम्**

टि०—गूढागूढव्यङ्ग्यभेदौ लक्षणायामुदीरितौ॥

टू०—गूढव्यङ्ग्यस्य प्राधान्ये लक्षणामूलके तथा।
अर्थो वाच्यः क्वचित्तत्र नोपयोगी भवन्पुनः॥
अर्थान्तरे परिणमेत्सुविशेषप्रकारके।
त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति॥
आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत्।
अत्र चानुपयोगीनि वच्मीत्यादिपदानि तु॥
उपदेशप्रदानाद्यर्थे परिणमन्ति हि।
क्वचिच्चानुपयोगित्वादत्यन्तं वा तिरस्कृतम्॥

उपकृतं बहु तत्र किमुच्यते,
सुजनता प्रथिता भवता परम्।
विदधदीदृशमेव सदा सखे,
सुखितमास्स्व ततः शरदां शतम्॥

टि०—अत्रापकारनिरते पदैरुपकृतादिभिः।
प्रयुक्तैर्व लक्षणया विपरीताख्यया पुनः॥
आधिक्यमपराधस्य प्रकटीक्रियते खलु।
नैजमर्थमिति त्यक्तं तदुदाहरणे पदैः॥

का०—विवक्षितञ्चान्यपरं वाच्यं यत्रापरस्तु सः ।
कोऽप्यलक्ष्यक्रमव्यङ्ग्यो लक्ष्यव्यङ्ग्यक्रमः परः ॥

टि०—तत्राद्यो रसभावादिरेक एवात्र गण्यते ।
एकोऽपि भेदोऽनन्तत्वात्संख्येयस्तस्य नैव यत् ॥
केचिद्विभावादीनेव रसत्वेनामनन्ति हि ।

वृ०—विभावाश्चानुभावाश्च तथैव व्यभिचारिणः ॥
न कदापि रसः किन्तु रसस्तैरिति वै क्रमः ।
स च लघुक्रियासत्वात्केनाचिन्नैव लक्ष्यते ॥

टि०—इत्यलक्ष्यक्रमव्यङ्ग्यो नाक्रमः स कदाचन ।

का०—रसभावतदाभासभावशान्त्यादिरक्रमः ॥

वृ०—भावोदयो भावसन्धिर्भावशाबल्यमेव च ।
अत्रादिग्रहणाज्ज्ञेया आलङ्कारिकसम्मताः ॥
प्राधान्येन स्थितो यत्र रसादिस्तत्र सर्वदा ।
अलङ्कार्य इति ज्ञेय आत्मा काव्यस्य स स्मृतः ॥
प्रधाने खलु वाक्यार्थे यत्राङ्गञ्च रसादयः ।
काव्ये तस्मिन्नलङ्कारो रसादिरिति कथ्यते ॥
रसवत्प्रेय ऊर्जस्वित्समाहित इति क्रमात् ।
अलङ्कारा गुणीभूतव्यङ्ग्यभेद उदाहृताः ॥

टि०—को रसो हीत्यपेक्षायां तत्स्वरूपः प्रकाश्यते ।

का०—कारणान्यथ कार्याणि सहकारीणि यानि च ॥
रत्यादेः स्थायिनो लोके तानि चेन्नाटयकाव्ययोः ।

**विभावा अनुभावाश्च कथ्यन्ते व्यभिचारिणः ॥**
**व्यक्तः स तैर्विभावाद्यैः स्थायीभावो रसः स्मृतः ।**

टि०—न्यस्यति निजमतपुष्ट्यै श्रीभरताचार्यनिर्मितं सूत्रम् ।

**सू०— "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः ॥"**

टि०—एतस्य व्याख्यारूपेण येन यन्मतमागतम् ।
रसगङ्गाधरात्तत्तदुधृत्यात्र विलिख्यते ॥
उत्तमक्रममाश्रित्य सौकर्यं च यथा भवेत् ।
सर्वप्रथमतो नूनं नाटकाभिनयेन वै ॥
आनन्दमनुभूयैव निश्चिकाय च दर्शकः ।
'रसो विभाव एव स्याद्भाव्यमानो निरन्तरम् ॥'
नाटकानन्तरं किन्तु चेष्टाविरहितं नरम् ।
विलोक्यापि रसस्यात्र नानुभूतिर्भवेदिति ॥
इतरे तु वदन्तीत्थ ' मनुभावस्तथा तथा ।'
काले किन्त्वतिरिक्ते हि विभावमनुभावकम् ॥
विलोक्य नैवानुभवो रसस्यातो न लक्षणम् ।
केचिच्च 'व्यभिचार्येव तथा परिणमे' दिति ॥
एषु सूत्रविरोधाद्वै न व्याख्या सम्भवेदिति ।
न कृता केनचित्पूर्वमित्यतो नोद्धृतात्र च ॥
विलोक्यापि विभावादीन्न रसानुभवः क्वचित् ।
तदित्थं हि प्रकर्तव्या व्याख्या सूत्रस्य सम्मता ॥
विभावस्यानुभावस्य तथैव व्यभिचारिणः ।
संयोगात्सुचमत्काराद्रसनिष्पत्तिरुच्यते ॥'

इति सूत्रं समाख्याय वदन्ति बहवः पुनः ।
"त्रिषु यो वै चमत्कारी स रसः" परिगीयते ॥
"अन्यथा न त्रयोऽपि स्यु" रित्येव सुन्दरं मतम् ।
व्याघ्रादयो विभावाहि यथा सन्ति भयानके ॥

रौद्रे वीरेऽद्भुते चापि सम्भवन्ति तथैव ते ।
शृङ्गारस्यानुभावा वै ह्यश्रुपातादयो यथा ॥
भयानकरसस्यापि करुणस्यापि सम्भवेत् ।
शृङ्गार इव मन्तव्या करुणे च भयानके ॥
वीरे रसे च विद्वद्भिश्चिन्ताद्या व्यभिचारिणः ।
'त्रिषु यो वै चमत्कारी स एव रसनामभाक् ॥
इति चेत्करुणस्थाने शृङ्गारास्वादनं ध्रुवम् ।
तस्माद्व्याख्यायतामित्थं सूत्रमित्यपरे जगुः ॥

'विभावादेर्हि संयोगात्समुदायात्तथैव च ।
मेलनाद्वापि विज्ञेयो रसनामाह्यलौकिकः ॥'
'विभावादय एव स्यू रस' इत्येव लक्षणम् ।
नैते रसः किन्तु रसस्तैरिति प्रतिपादितम् ॥

अनन्तरं सूत्रमेतद्व्याचख्यौ भट्टलोल्लटः ।
'विभावादेर्हि संयोगात्सम्बन्धादेव जायते ॥
रसस्य स्थायिभावादेर्निष्पत्तिरिह मुख्यतः ।
आरोपः क्रियते विज्ञैर्नटे' इत्येव सुन्दरम् ॥
एतद्विवृण्वते सम्यक् प्रकारेण यथा शृणु ।

सू०— आलम्बनविभावैस्तु ललनादिभिरेव च ।
स्थायी रत्यादिको भावो जनितः प्रथमं ततः ॥
उद्दीपनविभावैश्च चन्द्रोद्यानसमीरणैः ॥
उद्दीपितोऽथानुभावैर्भ्रूभुजाक्षेपणादिभिः ।
कृतः प्रतीतियोग्यश्च पोषितो व्यभिचारिभिः ॥
निर्वेदादिभिरप्यत्र कारणैः सहकारिभिः ।
रामादावनुकार्ये तु वृत्त्यैव मुख्यया पुनः ॥
तद्रूपतानुसन्धानान्नर्तके ऽपि तथैव च ।
रसः प्रतीयमानोऽसौ सामाजिक महोदयैः ॥

टि०— नटे त्वारोप्यमाणा सा रतिरेव रसः स्मृतः ।
श्रीशङ्कुकमतेनैतत्कदाचिदपि सम्भवेत् ॥
नटे हि नायकस्यापि तद्गतस्य रसस्य वा ।
आरोपे तदसम्बन्धान्न रसानुभव. क्वचित् ॥
एवं व्याख्या यदि भवेत्सौकर्यं जायते ततः ।
'अकृत्रिमेण रूपेण गृहीतैः कृत्रिमैरपि ॥
विभावाद्यैश्च संयोगादनुमानाद्रसस्य वै ।
रत्यादेः स्थायिभावादेर्जायतेऽनुमितिर्नटे ॥
रसो नायक एव स्यान्नटे चैवानुमानतः ।
विशदीक्रियते चैतदुदाहरणतोऽधुना ।

सू०— 'राम एवायमिति च तथा रामोऽयमेव च ।'
एतादृशी या प्रतीतिः सा सम्यक् परिगीयते ॥

अयं न राम इत्यत्र बाधे चोत्तरकालिके ।
रामोऽय मिति या बुद्धिः सा मिथ्या परिकीर्तिता ॥
रामः स्याद्वा नवायं स्यादिति संशयिणी मतिः ।
रामस्य सदृशोऽयं सा बुद्धिः सादृश्यगाहिनी ॥
एताभ्यः सुप्रसिद्धाभ्यः सुविलक्षणया धिया ।
चित्रे यथायं तुरगस्तथा रामोऽयमेतया ॥
प्रतिपत्त्या नटे ग्राह्ये पक्षभूते तथा नटे ॥
सेयं ममाङ्गेषु सुधारसच्छटा,सुपूरकर्पूरशलाकिका दृशोः ।
मनोरथश्रीर्मनसःशरीरिणी,प्राणेश्वरी लोचनगोचरं गता॥
दैवादहमत्र तया चपलायतनेत्रया वियुक्तश्च ।
अविरलविलोलजलदः कालः समुपागतश्चायम् ॥
इति काव्यानुसन्धानबलाच्छिक्षादिसाधनैः ।
निर्वर्तितस्वकार्यप्रकटनेन नटेन वै ॥
प्रकाशितैः कृत्रिमैस्तैरपि किन्तु सभास्थितैः ।
अकृत्रिमेण रूपेण मन्यमानैर्निरन्तरम् ॥
लोके च कारणैः कार्यैस्तथैव सहकारिभिः ।
विभावादिपदज्ञेयैः कारणैः काव्यवर्णितैः ॥
संयोगाद्गम्यगमकभावरूपात्सहात्र वै ।
सदानुमीयमानोऽपि सामाजिकमहोदयैः ॥
सद्वस्तुसौन्दर्यबलाद्रसनीयतया पुनः ।
अन्यानुमीयमानेन पदार्थेन विलक्षणः ॥

सू०— आलम्बनविभावैस्तु ललनादिभिरेव च ।
स्थायी रत्यादिको भावो जनितः प्रथमं ततः ॥
उद्दीपनविभावैश्च चन्द्रोद्यानसमीरणैः ॥
उद्दीपितोऽथानुभावैर्भ्रूभुजाक्षेपणादिभिः ।
कृतः प्रतीतियोग्यश्च पोषितो व्यभिचारिभिः ॥
निर्वेदादिभिरप्यत्र कारणैः सहकारिभिः ।
रामादावनुकार्ये तु वृत्त्यैव मुख्यया पुनः ॥
तद्रूपतानुसन्धानान्नर्तके ऽपि तथैव च ।
रसः प्रतीयमानोऽसौ सामाजिक महोदयैः ॥

टि०— नटे त्वारोप्यमाणा सा रतिरेव रसः स्मृतः ।
श्रीशङ्कुकमतेनैतत्कदाचिदपि सम्भवेत् ॥
नटे हि नायकस्यापि तद्गतस्य रसस्य वा ।
आरोपे तदसम्बन्धान्न रसानुभवः क्वचित् ॥
एवं व्याख्या यदि भवेत्सौकर्यं जायते ततः ।
'अकृत्रिमेण रूपेण गृहीतैः कृत्रिमैरपि ॥
विभावाद्यैश्च संयोगादनुमानाद्रसस्य वै ।
रत्यादेः स्थायिभावादेर्जायतेऽनुमितिर्नटे ॥
रसो नायक एव स्यान्नटे चैवानुमानतः ।
विशदीक्रियते चेतदुदाहरणतोऽधुना ।

सू०— 'राम एवायमिति च तथा रामोऽयमेव च ।'
एतादृशी या प्रतीतिः सा सम्यक् परिगीयते ॥

अयं न राम इत्यत्र बाधे चोत्तरकालिके ।
रामोऽय मिति या बुद्धिः सा मिथ्या परिकीर्तिता ॥
रामः स्याद्वा नवायं स्यादिति संशयिणी मतिः ।
रामस्य सदृशोऽयं सा बुद्धिः सादृश्यगाहिनी ॥
एताभ्यः सुप्रसिद्धाभ्यः सुविलक्षणया धिया ।
चित्रे यथायं तुरगस्तथा रामोऽयमेतया ॥
प्रतिपत्त्या नटे ग्राह्ये पक्षभूते तथा नटे ॥

सेयं ममाङ्गेषु सुधारसच्छटा, सुपूरकर्पूरशलाकिका दृशोः ।
मनोरथश्रीर्मनसः शरीरिणी, प्राणेश्वरी लोचनगोचरं गता ॥

दैवादहमत्र तया चपलायतनेत्रया वियुक्तश्च ।
अविरलविलोलजलदः कालः समुपागतश्चायम् ॥
इति काव्यानुसन्धानबलाच्छिक्षादिसाधनैः ।
निर्वार्तितस्वकार्यप्रकटनेन नटेन वै ॥
प्रकाशितैः कृत्रिमैस्तैरपि किन्तु सभास्थितैः ।
अकृत्रिमेण रूपेण मन्यमानैर्निरन्तरम् ॥
लोके च कारणैः कार्यैस्तथैव सहकारिभिः ।
विभावादिपदज्ञेयैः कारणैः काव्यवर्णितैः ॥
संयोगाद्गम्यगमकभावरूपात्सहात्र वै ।
सदानुमीयमानोऽपि सामाजिकमहोदयैः ॥
सद्वस्तुसौन्दर्यबलाद्रसनीयतया पुनः ।
अन्यानुमीयमानेन पदार्थेन विलक्षणः ॥

स्थायित्वेन च सम्भाव्य-मानो रत्यादिकस्तथा।
दर्शकानां वासनया चर्व्यमाणो रसः स्मृतः॥

टि०— नटे ऽनुमीयमानासौ रतिस्त्राभवद्रसः।
मते नायकभट्टस्य ह्यानन्दानुभवः सदा॥
प्रत्यक्षेणैव भवति नानुमानेन कर्हिचित्।
अतो व्याख्यायतामित्थं यथैतल्लिख्यते ऽधुना॥
'विभावादैर्हि सम् सम्यक् साधारण्येन वा पुनः।
योगात्तथा भावकत्वव्यापारेण हि भावनात्॥
निष्पत्तिः स्याप्युपाहितसत्त्वस्योद्रेकतस्ततः।
प्रकाशितस्य वै स्वात्मानन्दरूपस्य तस्य च॥
भोगापराख्येन साक्षात्कारेण विषयीकृतिः।
सूत्रमित्थं सङ्गमत्य सुखं विवृणुते पुनः॥

सू०— रसो नात्मगतत्वेन न ताटस्थ्येन कर्हिचित्।
रामादीनामभावेन रत्यादे रप्यभावतः॥
प्रतीयते नैव तथा, विभावादेरवास्तवात्।
नोत्पद्यते कदाचिद्धि, सिद्धासत्त्वान्न व्यज्यते॥
किन्तु काव्ये तथा नाट्ये ह्यभिधाद्यतिगो ऽपरः।
व्यापारो ऽस्ति विभावादेर्नाम्ना साधारणीकृतिः॥
सैव भावकता द्विचित्स्वभावेन केवलम्।
भाव्यमानश्च रत्यादिः स्थायी भोगेन भुज्यते॥
सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मया।
या संविदस्या विश्रान्तिस्वरूपेण हि सर्वदा॥

९०— न मन्यन्तेऽभिनवगुप्तपादास्त्विदं मतम् ।
यतो वै भावकत्वस्य भोजकत्वस्य च कल्पने ॥
गौरवं तद् व्यञ्जनैव किन्तु कार्यकरी मता ।
सूत्रस्यैवं प्रकर्तव्या व्याख्यातः सर्वसम्मता ॥
'रत्यादिस्थायिभावानां तैर्विभावादिभिः सह ।
व्यङ्ग्यव्यञ्जकतारूपात्सम्बन्धादेव केवलम् ॥
तेषामेव हि भावानामथवा मेलनान्मिथः ।
रसस्य निष्पत्तिरिति ह्यभिव्यक्तिर्ध्रुवं मता ॥

९०— तथाहि लोके विदितैः कारणैः प्रमदादिभिः ।
रत्यादेः स्थायिभावस्य ह्यनुमाने कृते सति ॥
अभ्यासपाटववतां काव्ये नाट्ये तथैव च ।
कारणत्वादिनाम्नां हि परिहारेण सर्वथा ॥
विभावनादिव्यापारवत्त्वादेव निरन्तरम् ।
अलौकिकविभावादिपदैस्तैर्व्यवहार्यकैः ॥
ममैवैते रिपोरेव तटस्थस्यैव वा पुनः ।
नैते मम न शत्रोर्वा न तटस्थस्य वेत्यपि ॥
तत्सम्बन्धविशेषस्य स्वीकारपरिहारयोः ।
नियमानिश्चयान्नूनं साधारण्येन सर्वथा ॥
प्रतीतैर्हि विभावाद्यैरभिव्यक्तस्तथैव च ।
सामाजिकानां मनसि वासनात्मतया स्थितः ॥

यो हि रत्यादिको भावः स्थायिमात्राभिधानवान् ।
तथा स्थितो ऽपि नियतः प्रमातृगतभावतः ॥
साधारणोपायवला ( द्विभावाद्यभिधावताम् ) ।
तत्काललुप्तनियतप्रमातृत्ववशेन च ॥
जातो, वेद्यान्तरस्पर्श-शून्योऽपरिमितस्तथा ।
भावो यस्यैतादृशेन प्रमात्रा ( कर्तृभूततः ) ॥
सर्वेषां हृदयानाञ्च समानानुभवेन वै ।
साधारण्येन स्वाकार इवाभिन्नो ऽपि सर्वदा ॥
गोचरीकृत, एको ऽस्य प्राणश्चर्वणता पुनः ।
एवं विभावादीनां च स्थितो यो जीवितावधिः ॥
प्रपानकरसन्यायाच्चर्व्यमाणो निरन्तरम् ।
परिस्फुरन्निव पुरो हृदयं प्रविशन्निव ॥
सर्वाङ्गीणमिवालिंङ्गन्नन्यत्सर्वं तिरोदधत् ।
तथा ब्रह्मास्वादमिव सर्वदैवानुभावयन् ॥
अलौकिकचमत्कारकारी स रस नामभाक् ।

टि०— आदृतं मम्मटैरत्र चिद्विशिष्टा रती रसः ॥
अस्ति प्रचलिताचात्रार्वाचीनाना मतद्वयी ।
मते हि प्रथमे तत्र व्यञ्जनास्पतः स्थितः ।
रत्यादिः स्थायिभावः स सम्भवेन्न रसः क्वचित् ॥
मयोगाद्धि विभावादेर्भावनास्पदोषतः ।
भवेद्रसस्य निष्पत्तिः किन्तु नैनन्मत मतम् ॥

उ०— तस्याः सान्द्रविलेपनस्तनयुगप्रश्लेषमुद्राङ्कितं,
किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यसे ।
इत्युक्ते क्व तदित्युदीर्य सहसा तत्सम्प्रमार्ष्टुं मया
संश्लिष्टा रभसेन तत्सुखवशात्तन्व्या च तद्विस्मृत
नायिकायाः कोपशान्तिरत्र वै व्यज्यते स्फुटम् ॥
एकस्मिञ्छयने विपक्षरमणीनामग्रहे मुग्धया,
सद्यो मानपरिग्रहग्लपितया चाटूनि कुर्वन्नपि ।
आवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तत्क्षणं,
मा भूत्सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः ॥
औत्सुक्यस्यात्र विज्ञेय उदयो नायिकागतः ॥
उत्सिक्तस्य तपः पराक्रमनिधेरभ्यागमादेकतः,
सत्सङ्गप्रियता च वीररभसोत्फालश्च मां कर्षतः
वैदेहीपरिरम्भ एष च मुहुश्चैतन्यमामीलय—
न्नानन्दी हरिचन्दनेन्दुशिशिरः स्निग्धो रुणद्ध्यन्य
आवेगहर्षयोः सन्धिर्भार्गवागमने ऽभवत् ॥
क्वाकार्यं शशलक्ष्मणः क्व च कुलं, भूयोऽपि दृश्येत
दोषाणां प्रशमाय नः श्रुतमहो कोपेऽपि कान्तं मुख
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दु
चेतः स्वास्थ्यमुपैहि, कः खलु युवा धन्योऽधरं धास्य
क्रमेणात्र वितर्कस्यौत्सुक्यस्य च स्मृतेस्तथा ।
स्मृतेरपि च शङ्काया दैन्यस्यापि धृतेः पुनः ॥

चिन्तायाश्चैव शाबल्यं स्फुटमेव प्रतीयते ।
भावस्थितिस्तूक्तपूर्वा "जाने कोपपराङ्मुखी ॥"

का०—मुख्ये रसेऽपि तेऽङ्गित्वं प्राप्नुवन्ति कदाचन ।

वृ०—यथा भृत्यविवाहादौ राजामुख्योऽप्यमुख्यवत् ॥
तथैव भावाभिव्यक्तौ रसो मुख्योऽप्यमुख्यवत् ॥

टि०—रसभावौ तदाभासौ भावस्य प्रशमोदयौ ।
सन्धिः शबलता चेति सर्वेऽपि रसनाद्रसाः ॥
न भावहीनोऽस्ति रसो न भावो रसवर्जितः ।
परस्परकृता सिद्धिरनयो रसभावयोः ।
व्यञ्जनौषधिसंयोगो यथान्नं स्वादुतां नयेत् ॥
एवं भावा रसाश्चैव भावयन्ति परस्परम् ।
विरोधिरससंख्यानं कृत्वैवाथ विरम्यते ॥
आद्यः करुणबीभत्सरौद्रवीरभयानकैः ।
भयानकेन करुणेनापि हास्यो विरोधभाक् ॥
करुणोहास्यशृङ्गाररसाभ्यामपि तादृशः ।
रौद्रस्तु हास्यशृङ्गारभयानकरसैरपि ॥
भयानकेन शान्तेन तथा वीररसः स्मृतः ।
शृङ्गारवीररौद्राख्यहास्यशान्तैर्भयानकः ॥
शान्तस्तु वीरशृङ्गाररौद्रहास्यभयानकैः ।
शृङ्गारेण च बीभत्स इत्याख्याता विरोधिता ॥
प्रबन्धे मुक्तके वापि रसादीन्बद्धुमिच्छता ।
यत्नः कार्यः सुमतिना परिहारे विरोधिनाम् ॥

शृङ्गारहास्यौ करुणरौद्रौ वीराद्भुतावपि ।
परस्पर मित्रभूतौ सुबीभत्सभयानकौ ॥
इति मया कथितेन पथामुना,
रसविशेषमशेषमुपेयुषा ।
ललितपादपदा सदलङ्कृतिः,
कृतधियामिह वाग्वनितायते ॥

× × × × ×

टि०—असलक्ष्यक्रमव्यङ्ग्यमुक्त्वा लक्ष्यक्रमं ब्रुवे ।
यो विवक्षितवाच्यस्य द्वितीयो भेद उच्यते ॥

**का०—अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिस्तु यः ।**
**शब्दार्थोभयशक्त्युत्थस्त्रिधा स कथितो ध्वनिः**

टि०—व्यङ्ग्यो वै शब्दमाहात्म्यादेवावगम्यते बुधैः ।
हेमचन्द्रमते नून भेदो नास्ति तृतीयकः ॥
किन्तु चन्द्रमत चैतन्नून गङ्गाधरोऽरुणत् ।

**का०—अलङ्कारोऽथ वस्त्वेव शब्दाद्यत्रावभासते ।**
**प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा ।**

टि०—'वस्त्वेवे' त्येव शब्देन ह्यलङ्कारं विना तु यत् ।
व्यङ्ग्यं तद्वस्तुमात्रं स्यादित्येव प्रतिपादितम् ॥

उल्लास्य कालकरवालमहाम्बुवाहं,
देवेन येन जरठोर्जितगर्जितेन ।
निर्वापितः सकल एव रणे रिपूणां
धाराजलैस्त्रिजगति प्रथितः प्रतापः ॥

मा भूदेवात्र वाक्यस्यासम्बद्धार्थकता नु सा ।
इत्यम्बुवाहदेवाद्यैर्नूनमप्रस्तुतैः सह ॥
करवालनृपादीनां कवेस्तात्पर्यतोऽधुना ।
कल्पनीयस्तथा भात्र उपमानोपमेययोः ॥
एवमत्रोपमा व्यङ्ग्या शब्दशक्त्यैव सा पुनः ।

तिग्मरुचिरप्रतापो,
विधुरनिशाकृद्विभो मधुरलीलः ।
मतिमानतत्त्ववृत्तिः,
प्रतिपदपक्षाग्रणीर्विभाति भवान् ॥

एकैकस्य पदस्यात्र द्विपदत्वे विरोधिता ।
अमितः समितः प्राप्तैरुत्कर्षैर्हर्षद प्रभो ।
अहितः सहितः साधुयशोभिरसतामपि ॥
विरोधाभास एवात्र शब्दशक्त्यावभासते ।
निरुपादानसम्भारमभित्तावेव तन्वते ।
जगच्चित्रं नमस्तस्मै कलाश्लाघाय शूलिने ॥
व्यतिरेकोऽत्र विज्ञेयोऽलङ्कारः काव्यवित्तमैः ।
प्राधान्यादुपमादीनां व्यङ्ग्योऽलङ्कार्य एव सः ॥
ब्राह्मणश्रमणन्यायात्तस्यालङ्कारता पुनः ।
एवं विद्वद्भिरुन्नेयो ह्यलङ्कारान्तरध्वनिः ॥
पन्थिअ ण एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे ।
उण्णअ-पओहरं पेक्खिअ उण जइ वससि ता वससु ॥
उपभोगक्षमश्चेत्त्वमास्स्वेति वस्तु व्यज्यते ॥

शनिरशनिश्च तमुच्चै-
र्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम् ।
यत्र प्रसीदसि पुनः,
स भात्युदारो ऽनुदारश्च ॥

शनिश्च वाशनिश्चैव विरुद्धावपि तौ पुनः ।
तवानुवर्तनार्थाय कुर्वाते कार्यमेककम् ॥
एवञ्चात्र कार्यरूपं वस्त्वेवाभिप्रकाश्यते ।

टि०—नूनं विरोधाभासस्य ध्वनिः पूर्वापरार्धयोः ।
पण्डितो ध्वनिशाबल्यं वस्त्वलङ्कारयोरिति ॥
अपि शब्दसमानार्थ "श्च" शब्दोऽत्र प्रतिष्ठितः ।
वाच्यो विरोधाभासोऽसौ व्यङ्ग्यो नैव कदाचन ।
तद्वस्तुध्वनिरेवेति प्रदीपे वै विलोक्यते ॥

का०—अर्थशक्त्युद्भवोऽप्यर्थो व्यञ्जकः सम्भवी स्वत
प्रौढोक्तिमात्रात्सिद्धो वा कवेस्तेनोम्भितेन वा
वस्तु वालङ्कृतिर्वापि षड्भेदोऽसौ व्यनक्ति त
वस्त्वलङ्कारमथवा तेनायं द्वादशात्मकः ॥

टि०—वक्तृप्रौढोक्तिसिद्धस्तु पण्डिताय न रोचते ।
अविशेषात्कवेर्वक्तुरिति गङ्गाधरे पुनः ॥
हेमचन्द्राचार्यवर्यः प्राह काव्यानुशासने ।
'कविप्रौढोक्तिसिद्धेन ह्यर्थेनैव गतार्थता ॥

कामं स्वतः सम्भवी वा कवेर्वक्तुश्च वा भवेत् ।
कविकार्यं सर्वमेत तेन चैकविधः स तु ॥
वृद्धस्यापेक्षया किन्तु बालस्य वाक्यवत्स्फुटम् ।
कवेरपेक्षया नूनं वक्तुर्मुखविनिर्गतम् ॥
सुचमत्कारातिशयं भजतेऽतस्त्रिधैव सः ।
एतन्नागेशभट्टस्य प्रकाशोद्द्यतके धृतम् ॥

वृ०— बहिः सम्भाव्यते तत्र ह्यौचित्येनैव सन्नपि ।
स स्वतःसम्भवी ज्ञेयः कवेर्वाक्यतो न हि ॥
कवेश्च प्रतिभामात्रनिर्मितोऽसावसन्नपि ।
तथा कविनिबद्धेन वक्त्रेति त्रिविधः स्मृतः ॥
वस्तुध्वनिरलङ्कारध्वनिश्चेति पुनर्द्विधाः ।
एवं षोढा व्यञ्जकः स द्विधा पुनरुदीर्यते ॥
वस्तुध्वनिरलङ्कारध्वनिश्चेति विधानतः ।
ध्वनिर्द्वादशभेदोऽसावर्थशक्त्युद्भवो यथा ॥
उदाहृतं प्रकाशेऽत्र प्रथमं सम्भवी स्वतः ।

अलसशिरोमणिधुत्ताण-
मग्गिमो धणसमाद्धिमओ ।
इअ भणिएण णअङ्गी,
पप्फुल्लविलोअणा जाआ ॥

प्रफुल्ललोचनत्वेन वस्तुना नायिकागतम् ।
'अयं ममैवोपभोग्यो वस्त्वेतद्व्यज्यते खलु ॥

धन्यासि या कथयसि प्रियसङ्गमेऽपि,
विस्रब्धचाटुशतकानि रतान्तरेषु ।
नीवीं प्रति प्रणिहिते तु करं प्रियेण,
सख्यः शपामि यदि किञ्चिदपि स्मरामि ॥
वाच्येन वस्तुनैवात्र व्यतिरेकश्च व्यज्यते ।
'त्वमधन्याहन्तु धन्ये' त्येवं वैनायिकोक्तितः ॥

दर्पान्धगन्धगजकुम्भकपाटकूट-
सन्क्रान्तनिघ्नघनशोणितशोणशोचिः ।
वीरैर्व्यलोकि युधि कोपकषायकान्तिः,
कालीकटाक्ष इव यस्य करे कृपाणः ॥
'करिष्यते क्षणादेव सर्वशत्रुबलक्षयः ।
इति वस्तूपमाख्येन ह्यलङ्कारेण व्यज्यते ॥

टि०—अत्र सम्भावनाभावाद्व्यक्तिरुत्प्रेक्षया तु न ।

इ०— गाढकान्तदशनक्षतव्यथा-
सङ्कटादरिवधूजनस्य यः
ओष्ठविद्रुमदलान्यमोचय-
न्निर्दशन्युधि रुषा निजाधरम् ॥
निजोष्ठदशनेनैव परोष्ठमोचनात्मना
नूनं विरोधाभासेन व्यज्यते तुल्ययोगिता ॥
'तत्कालमेव रिपवस्तेन व्यापादिता इति ।'
तथैव स्वोष्ठदशनरूपस्य कारणस्य च ॥

कार्यस्य वैरिवध्वोष्ठव्यथा या मोचनात्मनः ।
पौर्वापर्याभावरूपातिशयोक्तचैव व्यज्यते ॥
असौ समुच्चयस्तुल्ययोगितापरनामकः ।
मम क्षत्यापि चान्यस्य क्षतिरत्र निवर्तताम् ॥
उत्प्रेक्ष्यते बुद्धिरेवमित्युत्प्रेक्षापि सम्भवेत् ।
उदाहृतेषु च स्वतः सम्भवी व्यञ्जको मतः ॥
कविप्रौढोक्तिसिद्धोऽसौ यथोदाह्रियतेऽधुना ।
कैलासस्य प्रथमशिखरे वेणुसम्मूर्च्छनाभिः,
श्रुत्वा कीर्तिं विबुधरमणीगीयमानां यदीयाम् ।
स्रस्तापाङ्गा सरसबिसिनीकाण्डसञ्जातशङ्का,
दिङ्मातङ्गा श्रवणपुलिने हस्तमावर्जयन्ति ॥
'बिसिनीकाण्डसञ्जातशङ्का' भ्रान्तिमता पुनः ।
सन्देहेनाथवा व्यक्तं मन्यते वस्तु यद्यपि ॥
तथापि किञ्चिच्छुक्लं हि कर्णे प्रविशति स्फुटम् ।
हस्तावर्जनरूपेण वस्तुमात्रेण केवलम् ॥
नास्त्यर्थाधिगमो येषां तेषामपि विशेषतः ।
श्वैत्यमूर्त्तत्वादिबुद्धिजननेनैव त्वद्यशः ॥
चमत्कारं करोतीति व्यज्यते वस्तुमात्रकम् ॥

केसेसु बलामोडिअ,
तेण अ समरम्मि जअसिरी गहिआ ।
जह कन्दराहि विहुरा,
तस्स कण्ठअम्मि संठाविआ ॥

कन्दराभिर्हि ते कण्ठे स्थापिताइति वस्तुना ।
केशग्रहावलोकेन ताश्च सन्दीपितस्मराः ॥
कन्दरा विधुरांस्तासां कण्ठे गृह्णन्ति तत्पराः ।
व्यज्यते नूनमुत्प्रेक्षा कविप्रौढोक्तितः स्फुटम् ॥
अथवैकत्र सङ्ग्रामे विजयस्य च दर्शनात् ।
पलाय्य तत्र रिपवस्तिष्ठन्ति कन्दरास्विति ।
जयदर्शनरूपेण हेतुना काव्यलिङ्गकम् ॥
न पलाय्य गतास्ते च रिपवोऽपि तु तन्नृपात् ।
पराभवं हि सम्भाव्य कन्दरा न त्यजन्ति तान् ।
इत्यपह्नुतिरप्यत्र विज्ञेया विबुधोत्तमैः ॥

टि०—' तदैव सम्भवेदत्र ह्युत्प्रेक्षालङ्कृतेर्ध्वनिः
कन्दरासु यदारोपो नायिकाना भवेदिति ।
अन्यथा सम्भवेन्नैव केशाना ग्रहणेन वै ॥
मदनोद्दीपन चैतत्प्रदीपे ठक्कुरो जगौ ।
तथा सत्यपि सुश्लिष्टविशेषणविधानतः ॥
समासोक्तिर्नचोत्प्रेक्षा व्यज्यतेऽनेन वस्तुना ।
कण्ठे स्थापनरूपेण स्त्रीत्वेन कन्दरास्विति ॥ ' .
स्यादेव नायिकारोपो कन्दरासु सुनिश्चितम् ।
कवेर्निरक्षाविरहात्समासोक्तिर्न सम्भवेत् ॥

सू०— गाढालिङ्गणरहसु—
उज्जअम्मि दइए लहं सयोसरइ ।

माणंसिणीणं माणो–,
पीलण भीरु व हिअआहिं ॥
भयोत्प्रेक्षास्वरूपेण ह्यलङ्कारेण वै पुनः ।
प्रत्यालिङ्गनदानादि वस्त्वत्राप्यभिव्यज्यते ॥

जा ठेरं व हसन्ती,
कइवअणम्बुरुहबद्धविणिवेसा ।
दावेइभुअणमण्डल–
मण्णं विअ जअइ सा वाणी ॥

हसन्तीवोत्प्रेक्षयात्र चमत्कारैककारणम् ।
नवं नवं जगच्चैतन्निर्मिमीतेऽजडासना ॥
इत्यनेन प्रकारेण व्यतिरेको हि व्यज्यते ।
चतुर्षूक्तेषु पद्येषु लोकेऽसन्नपि केवलम् ॥
कविकल्पितमेवेति कविप्रौढोक्तिरुच्यते ॥
अथो कविनिबद्धस्य वक्तुः प्रौढिः प्रदर्श्यते ।
जे लंकागिरिमेहलासु खलिआ सम्भोअखिन्नोरई,
फारुप्फुल्लफणावलीकवलणे पत्ता दरिद्दत्तणम् ।
ते एण्हिं मलआनिला विरहिणीणीसाससम्पक्किणो,
जादा झत्ति सिसुत्तणे वि बहला तारुण्णपुण्णाविअ ॥
उक्तवाच्यार्थरूपेण वस्तुना वस्तु व्यज्यते ।
निःश्वासैः प्राप्तविभवाः वायवः किं न कुर्वते ॥

साहि विरइडणमाणस्स
मज्झ धीरत्तणेण आसासम् ।

पिअदंसण विहलंखल-
खलम्मि सहमाचि तेण ओसेरिअम् ॥

धैर्येणापसृतञ्चेतिवाच्यार्थेनैव वस्तुना ।
प्रार्थनाया अभावेऽपि प्रसन्नेति विभावना ॥
प्रियदर्शनसौभाग्यबलं धैर्येण सर्वथा ।
सोढुं न शक्यते नूनमित्युत्प्रेक्षापि व्यज्यते ॥

ओल्लोलकरअरअण-
क्खएहिं तुहलोअनेसु महदिण्णम् ।
रत्तंसुअं पसाओ,
कोवेण पुणो इमे ण अक्कमिआ ॥

कथं वहसि भद्र त्वं कुपिते लोचने इति ।
प्रश्नस्योन्नयनादत्रालङ्कारेणोत्तरेण वै ॥
नखक्षतानि चार्द्राणि गोपायसि न केवलम् ।
प्रसादपात्रं जातांद् तेषां किन्त्विति वस्तु तत् ॥

महिलासहस्सभरिए,
तुह हिअए सुहव सा अमाअन्ती ।
अणुदिणमणण्णकम्मा,
अङ्गं तणुअं वि तणुएइ ॥

अत्रामान्तीतिरूपेण काव्यलिंगेन व्यज्यते ।
तनुकस्यापि चाङ्गस्य सतनूकरणे तथा ॥
न वर्तते ते हृदयेऽतिशयोक्तिरियं पुनः ।

सदैव व्यञ्जको ज्ञेयस्तथायं कविकल्पितः॥

का०— शब्दार्थोभयभूरेकः

टि०— सदैव विबुधैर्मतः॥

वृ०— अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा।
तारकातरला श्यामा सानन्दं न करोति कम्॥
अत्र चैवोपमा व्यङ्ग्या ज्यौत्स्नीरात्रिरिवात्रला।

टि०—तारकातरलाद्या वै परिवृत्त्यसहिष्णवः॥
अतन्द्रेत्यादयः शब्दाः परिवृत्तिसहिष्णवः।
अर्थस्य शब्दस्य तथा मता व्यञ्जकता बुधैः॥

टि०— ध्वनेरुक्ताः प्रसङ्गेन,

का०— भेदा अष्टादशास्य तत्।
रसादीनामनन्तत्वाद्भेद एको हि गण्यते॥

वृ०—पूर्वं नव रसास्तत्र शृङ्गारो द्विविधः स्मृतः।
सम्भोगो विप्रलम्भश्च पुनराद्यस्त्वनेकधा॥
आलिङ्गनं चुम्बनञ्च परस्परविलोकनम्।
कुसुमावचयश्चैव जलकेलिरथापि च॥
सूर्यास्तसमयश्चन्द्रोदयः षड् ऋतवस्तथा।
अभिलाषादिभेदश्च विप्रलम्भोऽपि पञ्चधा।
तयोरपि विभावे च ह्यनुभावे तथैव च।
व्यभिचारिणि भावे च स्याद्वैचित्र्यमनेकधा॥

तत्रापि नायिकादेर्हि मध्यमोत्तमनीचता ।
देशकालाद्यवस्थानां भेदास्तत्रापि संस्थिताः ॥
इत्येकस्य रसस्यैव ह्यानन्त्यं च भवेद्ध्रुवम् ।
कान्येषां गणना स्याद्वै रसानामिति वित्तमाः ॥
असंलक्ष्यक्रमत्वन्तु रसादिध्वनिभेदतः ।
सदा सामान्यमाश्रित्य गण्यते ह्येक एव सः ॥

का०—वाक्ये द्व्युत्थो–

टि०— भवेत्तत्र शब्दार्थोभयशक्तितः ।

भवन्ति च–

का०— पदेऽप्यन्ये–

टि०— वाक्येऽपि च तथैव च ॥

एकावयवसंस्थेन भूषणेनेव कामिनी ।
पदद्योत्येन सुकवेर्ध्वनिना भाति भारती ॥
तत्राविवक्षिते वाच्ये पदप्रकाश्यता ध्वनेः ।
यस्य मित्राणि मित्राणि शत्रवः शत्रवस्तथा ॥
अनुकम्प्योऽनुकम्प्यश्च स जातः स च जीवति ॥
अत्र द्वितीयमित्रादिशब्दाः स्वार्थे हि बाधिताः ।
प्रकृतेऽनुपयुक्तत्वादत्यजन्तः स्वमर्थकम् ॥
अर्थान्तरं संक्रमिता अविवक्षितवाच्यके ।
आश्वस्तत्वं लक्षयति मित्राणीति पदं पुनः ॥
ततो नियन्त्रणीयत्वं शत्रुशब्दोऽपि लक्षयेत् ।

अनुकम्प्यपदश्चापि लक्षयेत्स्नेहपात्रताम् ॥
प्रकृतौ स्थिरतानेन नायकस्येति व्यज्यते ।

खल ववहारा दीसन्ति,
दारुणा जहावि तहावि धीराणाम् ।
हिअअवअस्स बहुमआ,
ण हु ववसाआ विमुञ्चन्ति ॥

मोहश्चेतनधर्मोऽयं बाधितोऽचेतने ततः ।
अत्यन्तं च त्यजन्नर्थं विमुञ्चन्ति पदं पुनः ।
विरामरूपमेवार्थं ततो लक्षयति स्फुटम् ॥
तेनेष्टकार्यकारित्वं व्यज्यते सुमनोहरम् ।
विवक्षितान्यवाच्येऽपि पदप्रकाश्यमुच्यते ।

लावण्यं तदसौ कान्तिस्तद्रूपं तत्पराक्रमः ।
तदा सुधास्पदमभूदधुना तु ज्वरो महान् ॥
तदसौ स तदेत्यादिपदैरर्थाः प्रकाशिताः ।
तथानुभवमात्रैकगोचरा अक्रमाः पुनः ॥
मुग्धे मुग्धतयैव नेतुमखिलः कालः किमारभ्यते,
मानं धत्स्व धृतिं बधान ऋजुतां दूरे कुरु प्रेयसि ॥
सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना,
नीचैः शंस हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति ॥
भीताननेत्यत्र पदं नीचैः शंसनयोग्यताम् ।
प्रकाशयन्मुख्यतया रागाधिक्यं व्यनक्त्यपि ॥

असंलक्ष्यक्रमव्यङ्ग्यः सम्भोगध्वनिरत्र तत् ।
पदप्रकाश्यतायान्तु भावादेर्न विचित्रता ॥
उदाहृता इमे नात्र तस्मादेव विरम्यते ।
अथ लक्ष्यक्रमव्यङ्ग्यध्वनिभेदेषु दर्शितः ॥
शब्दशक्तिसमुत्थोऽत्र पूर्वमुक्तो ध्वनिर्यथा ॥

रुधिरविसरप्रसाधित-
करवालकरालरुचिरपरिघः ।
झटिति भ्रुकुटिविटङ्कित-
ललाटपट्टो विभाति नृपभीमः ॥

भीमो भयङ्करो वाच्यः पाण्डवो व्यङ्ग्य इष्यते ।
अत्रोपमा ह्यलङ्कारो व्यज्यते सुस्फुटं च तत् ॥
भुक्तिमुक्तिकृदेकान्तसमादेशनतत्परः ।
कस्य नानन्दनिष्यन्दं विदधाति सदागमः ॥

सदागमपदश्चात्र स्वकीयोपपत्तिम्प्रति ।
सच्छास्त्रं मुख्यया वृत्त्या बोधयित्वैव तत्पुनः ॥
सज्जनागमरूपं हि व्यनक्ति वस्तु तत्क्षणम् ।
तथा सदागम इव नूनमेष सदागमः ॥
इत्यनेन प्रकारेण सम्भवेदुपमाध्वनिः ।
विवक्षाविरहात्किन्तु व्यज्यते वस्तु नोपमा ॥
अधुना चार्थशक्त्युत्थध्वनिभेदेषु पूर्ववत् ।
पदप्रकाश्यताप्यत्र प्राप्तकाले यथोच्यता ॥

सायं स्नानमुपासितं मलयजेनाङ्गं समालेपितं,
यातो ऽस्ताचलमौलिमम्बरमणिर्विश्रब्धमत्रागतिः ।
आश्चर्यं तव सौकुमार्यमभितः क्लान्तासि येनाधुना,
नेत्रद्वन्द्वममीलनव्यतिकरं शक्नोति ते नासितुम् ॥
आश्चर्यं सौकुमार्यन्त इति वाच्येन वस्तुना ।
कृतोपपातिसङ्गा त्वं क्लान्तेति वस्तु व्यज्यते ॥
तच्चाधुना पदेनैव स्वतः सम्भविना तथा ।
तदप्राप्तिमहादुःखविलीनाशेषपातका ।
तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा ॥
चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम् ।
निरुच्छ्वासतया मुक्तिं गतान्या गोपकन्यका ॥
"नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ।"
इति श्रुतेः सुभोग्यानि जन्मनां च सहस्रकैः ॥
भुक्तानि तान्यशेषाणि दुरितानां फलानि वै ।
वियोगतापदुःखस्य चिन्तनेनेति वस्तुना ॥
तादात्म्याध्यवसायेन नितान्तं फलदुःखयोः ।
तदशेषपदेनात्रातिशयोक्तिः सुव्यज्यते ॥
तथैव स्मृत्याह्लादेन भुक्ताः पुण्यचया अपि ।
अनेन वस्तुनात्रापि सुपुण्यफलसौख्ययोः ॥
अभेदाध्यवसायाच्चातिशयोक्तिर्ध्रुवं मता ।
सा च चयपदद्योत्या स्वतः सम्भविव्यञ्जके ॥

क्षणदासावक्षणदा,
वनमवनं व्यसनमव्यसनम् ।
बत वीर तव द्विषतां,
पराङ्मुखे त्वयि पराङ्मुखं सर्वम् ॥

शब्दस्य शक्तिमूलेन विरोधाङ्गेन सर्वदा ।
पराङ्मुखे त्वयीत्यादौ तेनार्थान्तरन्यासतः ॥
वस्तु सर्वपदद्योत्यं विधिरप्यनुवर्तते ।

तुह वल्लहस्स गोसम्मि
आसि अहरो मिलाणकमलदलो ।
इअ णववहुआ सोऊण,
कुणइ वअणं महीसम्मुहम् ॥

अधरो म्लानकमलदलं रूपकतः खलु ।
तथा कृत त्वया चास्य चुम्बनं हि मुहुर्मुहुः ॥
यथा म्लानत्वमित्येवं हेतुना व्यज्यते ततः ।
काव्यलिङ्गमलङ्कारो मिलाणपदशक्तितः ॥

राहु चन्दधवलाइ,
ललिअमप्फालिऊण जो चावम् ।
एकच्छत्तं विअ कुणइ,
भुअणरज्जं विजम्भन्तो ॥

अत्र चापास्फालनेन होकच्छत्रमिव स्फुटम् ।

येषां हि कामिनां राजा कामस्तेषु तु कश्चन ।
कदाचिन्न भवेदेव तदादेशपराङ्मुखः ॥
उपभोगपरैः किन्तु तैरात्रिरातिवाह्यते ।
एतद्वस्तु च भुअणरज्जद्योत्यं विनिश्चितम् ॥

निशितशरभियार्पयत्यनङ्गो,
दृशि सुदृशः स्वबलं वयस्यराले ।
दिशि निपतति यत्र सा च तत्र,
व्यतिकरमेत्य समुन्मिषन्त्यवस्थाः ॥

समुन्मिषन्त्यवस्थात्र वस्तुनानेन सर्वदा ।
परस्परं विरुद्धा हि तथावस्था भवन्त्यपि ॥
असौ विरोधालङ्कारो व्यक्तो व्यतिकरेण वै ।

वारिज्जन्तो वि पुणो,
सन्दावकत्थिएण हिअएण ।
थणहरवअस्सएण,
विसुद्धजाइ ण चलइ हारो ॥

स्तनभारवयस्येन शुद्धजातित्वहेतुना ।
काव्यलिङ्गेन हारो हि कम्पमानो निरन्तरम् ॥
आस्ते हीति 'ण चलइ' पदद्योत्यं च वस्तुकम् ।

सो मुद्धसामलङ्गो,
धम्मिल्लो कलिअ-ललिअ-णिअ-देहो ।
तीए कन्धाहि वलं,
गहिअ सरो सुरअसङ्गरे जअइ ॥

धम्मिल्लस्मर एतेन, तथा सुरतसङ्गरे ।
एतेन, रूपकेणात्र मुहुराकर्पणेन वै ॥
केशपाशस्तथा मासोह्यधुना स्कन्धयोर्यथा ।
सुरतस्य निवृत्तावप्यनिवृत्ताभिलाषुकः ॥
कामुकोऽभूदिति पुनर्व्यज्यतेऽत्र विभावना ।
सा च स्कन्धपदेनैव कविप्रौढोक्तिमात्रगा ॥

णवपुण्णिमामिअङ्कस्स,
सुहअ को तं सि भणसु मह सच्चम् ।
का सोहग्गसमग्गा,
पओस-रअणिव्व तुह अज्ज ॥

उक्तेन वस्तुनान्यस्यां मयीव प्रथमं प्रिय ।
अनुरक्तोऽभवस्त्वं न कदापि ततः परम् ॥
णवपुण्णिमेतिपदप्राधान्येनात्र व्यज्यते ।
वस्तु तत्कविवृद्धेन मार्गेणत्र च केवलम् ॥

ताहि णवणिहुवणसमरम्मि,
अंकवालीसहिए णिविडाए ।
हारो णिवारिओ व्विअ,
उच्छेदन्तो तदो कहं रमिअम् ॥

वाच्येन वस्तुमात्रेण हारच्छेदादनन्तरम् ।
इदं तव नवोढायाः प्रौढातो हि विलक्षणम् ॥
अभूद्रतमवश्यं च कीदृशं तद्वदाधुना ।
एवं [illegible] व्यज्यते ॥

प्रविशन्ती घरबारं,
विवलिअवअणा विलोइऊण पहम् ।
खंधे घेत्तूण घडं,
हा हा णट्ठोत्ति रूआसि सहि किं ति ॥

नष्टोऽतो रोदिषीत्येवं काव्यलिंगेन वै पुनः ।
गच्छन्तं कामुकं दृष्ट्वा स्वसङ्केतनिकेतनम् ॥
गन्तुमिच्छसि चेत्तत्र गृहीत्वैवापरं घटम् ।
गच्छेति वस्तु किं तीति पदेनात्रापि व्यज्यते ॥
कविप्रौढोक्तिसिद्धत्वाभावादत्र न तत्तथा ।
यथात्रेति पदं दत्वा द्वितीयं समुदाहृतम् ॥

विहलंखलं तुमं सहि,
दट्ठूण कुडेण तरलतरदिट्ठिम् ।
वारप्फंसमिसेण अ,
अप्पा गुरुओत्ति पाडिअ विहिण्णो ॥

अप्राप्तं कृतसङ्केतं नदीकूले लतागृहे ।
गृहप्रवेशावसरे प्राप्तं पश्चाद्विलोक्य च ॥
नदीयानेच्छया भूयः स्फोटितो बुद्धिपूर्वकम् ।
द्वारोपघातव्याजेन घटो व्याकुलया त्वया ॥
मयैवं चिन्तितं तत्किं नाश्वासिपि हि नायिके ।
निर्भयं हि व्रज त्वन्तु तत्समीहितासिद्धये ॥
ते श्वश्रूनिकटेऽहं च सर्वमेतत्समर्थये ।
वारप्फंसमिसेणेति ह्यपह्नुत्यात्र व्यज्यते ॥

वस्तु तत्कविवद्धेन मार्गेणैवेति निश्चयः ।

जोण्हाइ महुरसेण अ,
विइण्णतारुण्ण उत्सुअमणा सा ।
वुड्ढा वि णवोढाव्विअ,
परवहुआ अहह हरइ तुह हिअअम् ॥

सा वै परवधूत्वेन चित्तन्ते हरति ध्रुवम् ।
काव्यलिङ्गेनेत्यनेन समुज्झ्यास्मांस्त्वमिच्छसि ॥
वृद्धां परवधूं तत्र वक्तुं न शक्यते खलु ।
त्वदीयाचरितश्चैतदाक्षेपोऽयं प्रकाश्यते ॥
प्राधान्यतः परवधूपदेनेति न संशयः ।
शब्दार्थशक्तिमूले तु पदव्यंजकता नहि ॥
वाक्यस्यैव च प्राधान्याद्वाक्यं पूर्वमुदाहृतम् ।

टि०– अर्थान्तरे सङ्क्रामितमत्यन्तं वा तिरस्कृतम् ।
तथाऽलक्ष्यक्रमश्चैव त्रयस्त्वेते समीरिताः ॥
लक्ष्यक्रमेष्वपि पुनः वस्त्वलङ्कारभेदतः ॥
स्याच्छब्दशक्तिमूलोऽसौ द्विविधः काव्यनिर्णये ।
तथार्थशक्तिमूलोऽपि भवेद्द्वादशधा पुनः ॥
भेदा मसदशैते हि पदवाक्यगता अपि ।
द्विविधास्ते मिलित्वा च चतुस्त्रिंशद्विधा स्मृताः ॥
एकश्चोभयशक्त्युत्थः पंचत्रिंशदुदीरिताः ।
भवेच्च द्वादशविधः

का०– प्रबन्धेऽप्यर्थशक्तिभूः ।

०—उदाहृतः पदे वाक्ये प्रबन्धेऽथ निदर्श्यते ।
गृध्रगोमायुसंवादे यथा भारतमध्यगे ॥
अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसङ्कुले ।
कङ्कालबहुले घोरे सर्वप्राणिभयङ्करे ॥
न चेह जीवितः कश्चित्कालधर्ममुपागतः ।
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ॥
दिवाशक्तस्य गृध्रस्य वाक्यं जननिवारकम् ।
आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत साम्प्रतम् ॥
बहुविघ्नो मुहूर्तोऽयं जीवेदपि कदाचन ॥
अमुं कनकवर्णाभं बालमप्राप्तयौवनम् ।
गृध्रवाक्यात्कथं मूढास्त्यजध्वमविशङ्किताः ॥
निशि विजृम्भमाणस्य गोमायोर्वचनान्त्विदम् ।
जनव्यावर्तने निष्ठं प्रबन्धेन प्रकाश्यते ॥
अत्र स्वतः सम्भविना वस्तुना वस्तु व्यज्यते ।
एकादशान्ये भेदास्तु ग्रन्थविस्तरभीतितः ॥
नोदाहृतास्ते च पुनर्विज्ञेया विबुधोत्तमैः ।

का०—पदैकदेशरचनावर्णेष्वपि रसादयः ॥

टि०—पदं वाक्यं पदार्थश्च वाक्यार्थो धातुरप्यथ ।
सुप् तिङ् च प्रातिपदिकं कालो वचनमेव च ॥
अपिपूर्वनिपातौच विभक्तिः क्वापि तद्धितः ।
निपाताश्चादयः प्राद्या उपसर्गास्तथैव च ॥

सर्वनामाव्ययीमाग्र इमनिज् प्रत्ययस्तथा ।
आधार कर्मभूताख्यो वर्णाश्च रचनादयः ॥
प्रबन्धाश्च कविप्रौढोक्ति रसश्च वस्त्वलङ्कृति ।
एतेषां व्यञ्जकत्वं हि भवेल्लक्ष्यक्रमे पुनः ॥

उ०— रइकेलि-हिअ-णिअसण-
कर-किसलअ-रुद्ध-णअण-जुअलस्स ।
रुद्दस्स तइअ-णअणं
पव्वई-परिचुंबिअं जअइ ॥

जयतीति रतिव्यक्तावुक्तवाच्च तु शोभते ।
जिधातुरूपप्रकृतेः प्राधान्यमिह विद्यते ॥
यतः स्थगन-व्यापारसाम्येऽप्यस्य विधानकम् ।
लोकोत्तरेणैव पुनर्व्यापारेणेति सर्वथा ॥
उत्कृष्टमेतदेव स्यायदेवं धन्यजीवितम् ।
मेयान् सोऽयमपाकृतः सशपथं पादानतः कान्तया,
द्वित्राण्येव पदानि वासभवनाद्यावन्न यात्युन्मनाः ।
तावत्प्रत्युत पाणिसम्पुटगलन्नीवीनिबन्धं धृतो,
धावित्वैव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः ॥
द्वाराणीति परित्यज्य पदानीति प्रयुक्तवान् ।
ततश्च द्वारपर्यन्तगमनेऽप्यसहिष्णुता ॥
उत्कण्ठातिशयस्तेन कथ्यते नामतः खलु ।
पथि पथि शुकचञ्चूचारुराभाङ्कुराणां,

दिशि दिशि पवमानो वीरुधां लासकश्च।
नरि नरि किरति द्राक् सायकान्पुष्पधन्वा,
पुरि पुरि विनिवृत्ता मानिनीमानचर्चा॥
तिङा करोतीत्यनेन किरणस्यात्र साध्यता।
सुपा निवृत्तेत्यनेन निवृत्तेश्चापि सिद्धता॥
तीत्येतद्वर्तमानत्वं क्तोऽतीतत्वं व्यनक्ति वै।
कारणं किरणश्चात्र निवृत्तिः कार्यमुच्यते॥

टे०—तयोर्हि पौर्वापर्यस्य विपर्ययस्वरूपतः।
तद्रूपातिशयोक्तिश्च व्यक्ता भवति सुस्फुटम्॥

उ०—लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितः,
निराहाराः सख्यः सततरुदितोच्छूननयनाः।
परित्यक्तं सर्वं हसितपठितं पञ्जरशुकैः,
तवावस्था चेयं विसृज कठिने मानमधुना॥
अथात्र भूमिमित्युक्तं न तु भूमौ सुपा खलु।
तथा न लिखतीत्युक्तं शत्रा चैव लिखन्निति॥
अबुद्धिपूर्वकं किञ्चिल्लिखतीति च व्यज्यते।
आस्ते प्रयुक्तमित्यत्र न तथासित इत्यपि॥
स्थितिः प्रसादपर्यन्ता तेन व्यक्ता भवेत्तिङा।
अत्र तिङ् सुप् विभक्तीनां व्यञ्जकत्वं विनिश्चितम्॥

गामरुहम्मि गामे,
वसामि णअर ट्ठिइं ण जाणामि।

णाअरिआणां पइणो,
हरेमि जा होमि सा होमि ॥

टि०—अत्र नागरिकाणां हि नूनं पष्ठीविभक्तितः ।
तादृक्कलाभिज्ञतादिरूपं पत्यौ प्रकाश्यते ॥

सू०—"रमणीयः क्षत्रियस्य ह्यासीदेष कुमारकः ।"
भग्नमाहेशकोदण्डे रामे क्रोधोऽत्र व्यज्यते ॥

टि०—भार्गवस्य यथा वीर-चरिते नाटके पुनः ।
आसीदिति च लङ्रूपभूतकालप्रयोगतः ॥

सू०— ताणं गुणग्गहणाणं,
ताणुक्कण्ठाणं तस्य पेमस्स ।
ताणं भणिआणं,
सुन्दर एरिसिअं जाअमवसाणम् ॥

तद्गुणग्रहणदीनां कारणानामनेकता ।
प्रेम्णस्तस्येति कार्यस्य अस्त्येव स्फुटमेकता ॥
अत्रैकत्वबहुत्वस्य व्यंजकत्वं विनिश्चितम् ।
रे रे चञ्चललोचनाञ्चितरुचे चेतः प्रमुच्य स्थिर—
प्रेमाणं महिमानमेणनयनामालोक्य किं नृत्यसि ।
किं मन्ये विहरिष्यसे बत इतो मुञ्चान्तराशामिमां,
एषा कण्ठतटे कृता खलु शिला संसारवारांनिधौ ॥

टि०—' प्रहासे चे ' ति मन्यस्य ह्येकनोत्तमता मता ।
त्वं मन्ये तेन चैवात्र हासोक्तिर्व्यज्यते खलु ॥

रू०— येषां दोर्बलमेव दुर्बलतया ते सम्मतास्तैरपि,
प्रायः केवलनीतिरीतिशरणैः कार्यं किमुर्वीश्वरैः ॥
ये क्ष्माशक्र पुनः पराक्रमनयस्वीकारकान्तक्रमा,-
स्ते स्युर्नैव भवादृशास्त्रिजगति द्वित्राः पवित्राः परम् ॥

टि०— पराक्रमनयेत्यत्र समासो द्वंद्व इष्यते ।
नयस्याभ्यर्हितत्वेऽप्यकृतं पूर्वनिपातनम् ॥
पराक्रमस्य प्राधान्यमत्र तेनावगम्यते ।

रू०— प्रधानाध्वनि धीर धनु-
र्ध्वनिभृति विधुरैरयोधि तव दिवसम् ।
दिवसेन तु नरप भवा-
नयुद्ध विधिसिद्धसाधुवादपदम् ॥

टि०— "कालाध्वनोरि" त्यनेन द्वितीया दिवसं ततः ।
उदयास्तमयं यावद्योधि शत्रुणा तव ॥
"अपवर्गे तृतीये" ति तृतीया दिवसेन वै ।
फलप्राप्तिस्तत्रैवेति द्योत्यते हि तृतीयया ॥

रू०— भूयो भूयः सविधनगरीरथ्यया पर्यटन्तं,
दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था ।
साक्षात्कामं नवमिव रतिर्मालती माधवं यत,
गाढोत्कण्ठालुलितलुलितैरङ्गकैस्ताम्यतीति ॥

टि०— अङ्गादत्रा "नुकम्पाया" मिति कप्रत्यये कृते ।
दयनीयोऽयमिति च व्यज्यते तद्धितेन वै ॥

सू०— परिच्छेदातीतः सकलवचनानामविषयः,
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो-
विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते ॥

टि०— ध्वंसशब्दप्रयोगेऽपि भवेदेव गतार्थता ।
प्रोपसर्गस्य योगेन प्रकर्षस्त्व हि व्यज्यते ॥

सू०— कृतश्च गर्वाभिमुखं मनस्त्वया,
किमन्यदेवं निहताश्च नो द्विषः ।
तमांसि तिष्ठन्ति हि तावदंशुमान्,
न यावदायात्युदयाद्रिमौलिताम् ॥

टि०— निपातेन " च " शब्देन व्यज्यते तुल्ययोगिता ।
उक्तोनागेशभट्टेन ह्यभावेव समुच्चयः ॥

सू०— रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परा-
मस्मद्भाग्यविपर्ययाद्यदि परं देवो न जानाति तम् ।
बन्दीवैष यशांसि गायति मरुद्यस्यैकबाणाहति-
श्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिः ॥
व्यज्यते सुप्रसिद्धिश्च सर्वनाम्ना ह्यसाविति ।
न चैकभुवने किन्तु समस्तभुवनेष्वपि ॥
गुणैरनेन दोषैर्वा न किन्तु सुगुणैरिति ।
बहुत्वस्य प्रयोगेण व्यज्यते नैव संशयः ॥
न त्वस्य मत्यर्थवात्र ह्यस्मदित्यस्य निश्चितम् ।

सर्वस्यापेक्षिणो नूनं सर्वनाम्नस्तथैव च ।
न चाभाग्यवशेनात्र न दुर्भाग्यवशेन वा ।
किन्त्वेतत्फलितं सर्वं मम भाग्यविपर्ययात् ।
एवमाद्यभिधानस्य व्यंजकत्वमितीरितम् ।

तरुणिमनि कलयति कला-
मनुमदनधनुर्भ्रुवोः पठत्यग्रे ।
अधिवसति सकलललना-
मौलिमियं चकितहरिणचलनयना ॥

'त्व' समानार्थकेनात्र नूनं तरुणशब्दतः ।
इमनिच्प्रत्ययेनापि मौढित्वं वयसि ध्रुवम् ॥
व्यज्यते सौकुमार्यं च तद्विद्वद्भिर्निगद्यते ।
धनुः समीप एतेन भवेदेव गतार्थता ॥
अत्राप्यनुधनुर्धृत्वा वैशिष्ट्यं प्रकटीकृतम् ।
मौलाविति प्रयोक्तव्य उक्तं मौलिमितीह वै ॥
सौन्दर्यातिशयो व्यक्तस्तेन नूनं भवेदिति ।
वर्णानां रचनानाञ्च व्यक्तिर्गुणनिरूपणे ॥
अपि शब्दात्प्रबन्धेषु नाटकादिष्वपि स्मृतम् ।
वाक्ये पदे तदंशे च रचनायां तथैव च ॥
वर्णे तथा प्रबन्ध च व्यंजकत्वं हि षड्विधम् ।

**ग०—भेदास्तदेकपञ्चाशा-**

टि०— दुक्ता पूर्वप्रसङ्गतः ॥

अविवक्षितवाच्यस्य प्रथमं भेदयोर्द्वयोः ।

पदवाक्यगतत्वेन चातुर्विध्यं प्रशस्यते ॥
विवक्षितान्यवाच्ये च ह्यसंलक्ष्यक्रमः पुनः ।
पदादिगतभेदेन षड्विधो गण्यते बुधैः ॥
लक्ष्यक्रमे शब्दशक्तिर्द्विविधोऽपि चतुर्विधः ।
स द्वादशविधोऽप्यत्र ह्यर्थशक्तिः पदादिगः ॥
षड्त्रिंशद्विध एव स्यादेकस्तूभयशक्तिजः ।
एकपञ्चाशदेव स्युः सर्वसङ्कलनेन वै ॥
भवियद्रसनेत्राणि–( २६०१ )

का०– तेषां चान्योन्ययोजने ।

टि०–अङ्गाङ्गित्वेऽलङ्कृतीनां तद्वदेकाश्रयस्थितौ ॥
सन्दिग्धत्वे च भवति संकरस्त्रिविधस्ततः ।

का०–सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया ॥
वेदखाब्धिवियच्चन्द्राः–( १०४०४ )

टि०– भवन्ति व्यञ्जनाभिदः ।
शुद्धभेदैः सम भूय –

का०– ( १०४५५ ) शरेषुयुगखेन्दवः ॥

टि०–पर मतेऽर्वाचीनानामयुक्ता गणना यतः ।
अविमाविमभेदस्य योजनं ह्यसकृद्भवेत् ॥
अर्थान्तरे संक्रमितवाच्यस्यान्येन योजने ।
यो भेदः सम्भवेन्नून सोऽप्यन्तस्यापि सम्भवेत् ॥

गुणजातिक्रियाद्रव्यैर्गुणादिगुणेन पुनः।
विषमावसरे स्युर्वै भेदाः षोडशयोजने ॥
परं दशैव दशमे भवन्तेव निदर्शिताः।
रसदपक्षाग्निमेदिन्यस्तस्माद्भेदा भवन्त्यमी ( १३२६ ) ॥
संसृष्ट्या सङ्करैश्चापि वेदाभ्रदहनेषवः (५३०४)।
संयोजने शुद्धभेदैः बाणेष्वग्निशराः स्मृताः (५३५५)
कविराजोऽपि मनुते निजसाहित्यदर्पणे।
वेदखाग्निशराः शुद्धैरिशुवाणाग्निसायकाः ॥
विरुणद्धि मतश्चैतात्किन्तु गोविन्दठक्कुरः।
ध्वनिष्वपि भवेन्नूनं पुंड्रकादिरसेष्विव ॥
ह्यत्येऽतिशयस्तद्वदेवानातिशयः पुनः।
अर्थान्तरगतश्चापि तथात्यन्ततिरस्कृतः ॥
अनयोर्मेलने भूयश्चमत्कृतिरिति ध्रुवम्।
अन्यथा तत्रभवता विषमालङ्कृतेर्भिदाः ॥
गणिताः षोडशस्थाने दशैव न कथं पुनः।
किञ्च चेदग्रिमस्यात्र गुणनं ह्रासकृत्तदा ॥
तद्वस्तुनालङ्कारस्य ह्यलङ्कारेण वस्तुनः।
व्यक्तावपि न वैचित्र्यं कथं द्वादशता पुनः ॥
एवञ्च भट्टपक्षस्य साधीयस्त्वं विनिश्चितम्।

**उ०– खणपाहुणिआ देअर,**
**जाआए सुहअ किंपि दे भणिआ।**

रुअइ पडोहरवलही—
घरम्मि अणुणिज्जउ वराई ॥

टि०—किमुतानुनयो ह्यत्र मुख्यार्थे बाधित खलु ।
उपभोगात्मके लक्ष्ये सक्रान्तोऽर्थान्तरे पुन ॥
अविवक्षितवाच्ये हि वाच्ये वाथ विवक्षिते ।
उपभोगात्मकव्यङ्ग्यव्यञ्जकोऽप न निश्चय ॥
सन्देहसङ्करस्तत्र प्रमाणाभावत स्फुटम् ।

सू०— स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाकाघनाः ॥
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ।
काम सन्तु दृढ कठोरहृदयो रामोऽस्मि सर्वं सहे,
वैदेही तु कथ भविष्यति हहा हा देवि धीरा भव ॥

टि०—मूर्तिहीने तथाकाशे लेपन स्यादसम्भव ।
लिप्तेति लक्षणाशक्त्या सम्पर्क लक्षयेदिति ॥
व्यनक्ति तस्यातिशयमत्यन्तञ्च तिरस्कृत ।
तथैवाचेतने मेघे मयूराणा हि मित्रता ॥
न सम्भवेदिति सुहृल्लक्षयेदुपकारिताम् ।
व्यनक्ति तस्यातिशयम यन्त हि तिरस्कृत ॥
ससृष्टिरनयोरत्र मन्यते विबुधोत्तमे ।
मुख्यार्थे बाधितो राम लक्षयेद्दु खपात्रताम् ॥
राज्यत्यागादिदु खाना सहने शीलना पुन ।
व्यनक्त्यर्थान्तरे नून वाच्य सङ्क्रमित त्वत ॥

मेघैश्च व्याप्तमाकाशं तथा केकां च केकिनाम् ।
सोढुं शक्तोऽस्मीत्यवज्ञा प्रकटीक्रियतेऽत्र वै ॥

अनुग्राह्यमवज्ञात्र तथानुग्राहकः पुनः ।
उद्दीपक इति तयोः सङ्करोऽस्ति न संशयः ॥

अवज्ञया सहैवात्र विप्रलम्भोऽपि व्यज्यते ।
व्यञ्जको राम एवास्ति ह्यवज्ञाविप्रलम्भयोः ॥

एवञ्चैकव्यञ्जकानुप्रवेशः सङ्करः स्मृतः ।
एवमन्यदुदाहार्यमिति दिग्दर्शनं ध्वनेः ॥



# काव्य-प्रकाशः

## पञ्चम उल्लासः ।

सू०— सह भेदप्रभेदैस्तैर्निर्णीते हि ध्वनौ पुनः ।
गुणीभूतव्यङ्ग्यभेदान् क्रमप्राप्तानथ ब्रुवे ॥

का०— अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् ।
सन्दिग्धतुल्यप्राधान्ये काकाक्षिप्तमसुन्दरम्
व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदाः स्मृ

टि०—अस्फुटसन्दिग्धप्राधान्यतुल्यप्राधान्यभेदतः ।
त्रिविधं मध्यमं काव्यं हेमचन्द्रमते पुनः ॥
असुन्दरं पराङ्गञ्च ह्यस्फुटं सुस्फुटं तथा ।
अस्त्येव त्रिलीयन्ते तेन नैवाष्टभेदता ॥

सू०— कामिनीकुचवद्गूढं तत्करोति चमत्कृतिम् ।
प्रतीयते चागूढन्तु यदैव वाच्यवत्स्फुटम् ॥
गुणीभूतत्वमेव स्याद्व्यङ्ग्यस्येति बुधा जगुः ।
यस्यासुहृत्कृततिरस्कृतिमेत्य तप्त-
सूचीव्यधव्यतिकरेण युनक्ति कर्णौ ।
कार्ष्णीगुणग्रथनभाजनमेष सोऽस्मि,
जीवन्न सम्प्रति भवामि किमावहामि ॥

जीवन्न म्रियते कश्चिदिति मुख्यार्थबाधने ।
कार्येऽशक्तिं लक्षयति निजस्याभिमते पुनः ॥
अर्थान्तरे हि संक्रम्य श्रेयो मे मरणं ध्रुवम् ।
इति व्यङ्ग्यमगूढं तद् वाच्यवद्धै प्रतीयते ॥
उन्निद्रकोकनदरेणुपिशङ्गिताङ्गाः,
गायन्ति मञ्जु मधुपा गृहदीर्घिकासु ।
एतच्चकास्ति च रवेर्नवबन्धुजीव-
पुष्पच्छदाभमुदयाचलचुम्बिबिम्बम् ॥
चुम्बनं चेतनं धर्मं तत्सूर्येऽचेतने कथम् ।
इति मुख्यार्थबाधेन संयोगो लक्ष्यते ततः ॥
अत्यन्तं हि तिरस्कुर्वन्नुषःकालश्च व्यज्यते ।
वाच्यायमानमेवैतदगूढं गौणरूपतः ॥
अत्रासीत्फणिपाशबन्धनविधिः शक्त्याभवद्देवरे,
गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिरत्राहृतः ।
दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं प्रापितः,
केनाप्यत्र मृगाक्षि राक्षसपतेः कृत्ता च कण्ठाटवी ॥
अत्रानुनायके प्रोक्ते सुमित्रानन्दने पुनः ।
मेघनादे चेन्द्रजिति वर्णिते प्रतिनायके ॥
अनुनायके हनुमति धीरोदात्तो हि नायकः ।
व्यक्तीभवेद्राम एव ह्यर्थशक्त्यैव केवलम् ॥
केनाप्यत्रेति शब्देन तद्व्यङ्ग्यं प्रस्फुटीकृतम् ।
तस्याप्यत्रेति पाठे तु ख्यातस्य रावणस्य वै ॥

# काव्य-प्रकाशः

## पञ्चम उल्लासः ।

सू०— सह भेदप्रभेदैस्तैर्निर्णीते हि ध्वनौ पुनः ।
गुणीभूतव्यङ्ग्यभेदान् क्रमप्राप्तानथ ब्रुवे ॥

का०— अगूढमपरस्याङ्गं वाच्यासिद्ध्यङ्गमस्फुटम् ।
सन्दिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम् ।
व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदाः स्मृताः

टि०— असत्सन्दिग्धप्राधान्यतुल्यप्राधान्यभेदतः ।
त्रिविधं मध्यमं काव्यं हेमचन्द्रमते पुनः ॥
असुन्दरं पराङ्गं च ह्यस्फुटं सुस्फुटं तथा ।
असत्येव विलीयन्ते तेन नैवाष्टभेदता ॥

सू०— कामिनीकुचवद्गूढं तत्करोति चमत्कृतिम् ।
प्रतीयते चागूढन्तु सदैव वाच्यवत्स्फुटम् ॥
गुणीभूतत्वमेव स्याद्व्यङ्ग्यस्येति बुधा जगुः ।
यस्यासुहृत्कृततिरस्कृतिमेत्य तप्त-
सूचीव्यधव्यतिकरेण युनक्ति कर्णौ ।
काञ्चीगुणग्रथनभाजनमेष सोऽस्मि,
जीवन्न सम्प्रति भवामि किमावहामि ॥

जीवन्न म्रियते कश्चिदिति मुख्यार्थबाधने ।
कार्येऽशक्तिं लक्षयति निजस्याभिमते पुनः ॥
अर्थान्तरे हि संक्रम्य श्रेयो मे मरणं ध्रुवम् ।
इति व्यङ्ग्यमगूढं तद् वाच्यवद्धि प्रतीयते ॥
उन्निद्रकोकनदरेणुपिशङ्गिताङ्गाः,
गायन्ति मञ्जु मधुपा गृहदीर्घिकासु ।
एतच्चकास्ति च रवेर्नवबन्धुजीव-
पुष्पच्छदाभमुदयाचलचुम्बिबिम्बम् ॥
चुम्बनं चेतनं धर्मं तत्सूर्येऽचेतने कथम् ।
इति मुख्यार्थबाधेन संयोगो लक्ष्यते ततः ॥
अत्यन्तं हि तिरस्कुर्वन्नुषःकालश्च व्यज्यते ।
वाच्यायमानमेवैतदगूढं गौणरूपतः ॥
अत्रासीत्फणिपाशबन्धनविधिः शक्त्याभवद्देवरे,
गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिरत्राहृतः ।
दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं प्रापितः,
केनाप्यत्र मृगाक्षि राक्षसपतेः कृत्ता च कण्ठाटवी ॥
अत्रानुनायके प्रोक्ते सुमित्रानन्दने पुनः ।
मेघनादे चेन्द्रजिति वर्णिते प्रतिनायके ॥
अनुनायके हनुमति धीरोदात्तो हि नायकः ।
व्यक्तीभवेद्राम एव ह्यर्थशक्त्यैव केवलम् ॥
केनाप्यत्रेति शब्देन तद्व्यङ्ग्यं प्रस्फुटीकृतम् ।
तस्याप्यत्रेति पाठे तु ख्यातस्य रावणस्य वै ॥

परामर्शेन रामस्य व्यङ्ग्यमक्षुण्णमेव तत् ।
अनुस्वानामसंलक्ष्यक्रमोऽलक्ष्यक्रमस्तथा ॥
अपरस्य रसादेर्वा वाच्यस्याङ्गं भवेद्यदा ।
अपराङ्गगुणीभूतव्यङ्ग्यं निश्चयमेव तत् ॥
अयं स रशनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥
परिदेवनरूपस्य करुणस्याङ्गमत्र वै ।
शृङ्गारो ह्यभवन्नूनमसंलक्ष्यक्रमस्ततः ॥

टि०—एको रसो रसस्याथ भावस्याङ्गं यदा भवेत् ।
काव्यविद्भिरलङ्कारः कथ्यते रसवत्तदा ॥
शृङ्गारकरुणौ चात्र ह्यङ्गाङ्गित्वमुपाश्रितौ ।

सू०—कैलासालयभाललोचनरुचा निर्वर्तितालक्तक-
व्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा त्रायताम्
स्पर्धाबन्धसमृद्धयेव सुदृढं रूढा यया नेत्रयोः,
कान्तिः कोकनदानुकारसरसा सद्यः समुत्सार्यते ॥
पार्वतीविषयस्यात्र रतिभावस्य निश्चयम् ।
शृङ्गारोऽङ्गमभूत्तेन गौणत्वं रसवच्च तत् ।
अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधय-
स्तानेतानपि बिभ्रती किमपि न क्लान्तासि तुभ्यं नमः।
आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुव-
स्तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥

तथात्र रतिभावोऽयं पृथिवीविषयः पुनः ।
नृपतिस्तुतिरूपस्य रतिभावस्य चाङ्गकम् ॥

टि०—तदा प्रेयो यदा नूनं भावो भावाङ्गतां भजेत् ।
अभूद्भावस्य भावोऽङ्गं प्रेयोऽलङ्कार एव तत् ॥

उ०—वन्दीकृत्य नृप द्विषां मृगदृशस्ताः पश्यतां प्रेयसां,
श्लिष्यन्ति प्रणमन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः ।
अस्माकं सुकृतैर्दृशोर्निपतितोऽस्यौचित्यवारां निधे,
विध्वस्ता विपदोऽखिलास्तदिति तैःप्रत्यर्थिभिः स्तूयसे ॥

पूर्वार्धे सैन्यनिष्ठा या रतिः सा परदारगा ।
अनौचित्यप्रवृत्तत्वाच्छृङ्गाराभास एव सः ॥
उत्तरार्धे पुनर्वैरिनिष्ठो भावश्च शत्रुगः ।
भावाभासावुभौ तौ हि रतिभावाङ्गतां गतौ ॥

टि०—अनौचित्यप्रवृत्तानां कामक्रोधादिकारणात् ।
भवानाञ्च रसानाञ्च बन्धऊर्जस्विदिष्यते ॥
तेनोर्जस्विदलङ्कारो गण्यते विबुधैरयम् ।

अविरलकरवालकम्पनै-
र्भ्रुकुटीतर्जनगर्जनैर्मुहुः ।
ददृशे तव वैरिणां मदः,
स गतः क्वापि तवेक्षणे क्षणात् ॥

पार्थिवस्तुतिरूपस्य रतिभावस्य चाङ्गकम् ।
वैरिणो मदरूपस्य भावशान्तेर्न संशयः ॥

टि०—रसभावतदाभासवृत्तेः प्रशमबन्धनम् ।
समाहितमिति प्रोक्तमत्रैतल्लक्षणाङ्कितम् ॥

उ०— साकं कुरङ्गकदृशा मधुपानलीलां,
कर्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते ।
अन्याभिधायि तव नाम विभो गृहीतं,
केनापि तत्र विषमामकरोदवस्थाम् ॥

त्रासस्य ह्युदयश्चात्र भावस्याङ्गमभूत्ततः ।

टि०—भावोदयाख्यालङ्कारो भवतीति सुनिश्चितम् ॥

उ०—असोढा तत्कालोल्लसदसहभावस्य तपसः,
कथानां विश्रम्भेष्वथ च रसिकः शैलदुहितुः ।
प्रमोदं वो दिश्यात्कपटबटुवेषापनयने,
त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः ॥
अत्र स्मरहरे सन्धिरावेगधैर्ययोरभूत् ।
साचाङ्गं रतिभावस्य महेशविषयस्य वै ॥

टि०—भावसन्धिरलङ्कारः कथ्यते विबुधैः सदा ।

उ०—पश्येत्कश्चिच्चल चपल रे का त्वराहं कुमारी,
हस्तालम्बं वितर हहहा व्युत्क्रमः क्वासि यासि ।
इत्थं पृथ्वीपरिवृढ भवद्विद्विषोऽरण्यवृत्तेः,
कन्या कञ्चित्फलकिसलयान्याददानाभिधत्ते ॥
क्रमेण शङ्कासूया च धृतिश्चैव स्मृतिः श्रमः ।
दैन्यश्च मतिरौत्सुक्यमेषां शबलताभवत् ॥

**नृपतिस्तुतिरूपस्य रतिभावस्य चाङ्गकम्।**

टि०— अलङ्कारश्च विज्ञेयो भावशाबल्यमेव तत् ॥

**वृ०— भावोदयो भावसन्धिर्भावशाबल्यमेव च।**

**नालङ्कारतयोक्तानि प्राचीनैरिति निश्चयः ॥**

**काव्यशोभाधायकत्वात्कश्चिद्ब्रूयात्तथापि च।**

**अतः प्रसङ्गोपात्तानि मयाप्युक्तानि तान्यपि ॥**

टि०—शब्दार्थमुपकुर्वन्तो ये रसस्योपकारकाः।

अलङ्कारास्त एव स्युरिति काव्यविदां नयः ॥

रसादयस्तूपकार्या शब्दार्थाभ्यामिति स्थितम्।

ततश्च सम्भवेन्नैव तेष्वलङ्कारता पुनः।

अलङ्कारत्वमेतेषां खण्डयन्तीति केचन ॥

अन्ये पुना रसादीनामुपकारेण केवलम्।

चिरन्तनानां भक्त्यैवालङ्कारत्वं भजन्ति ते।

रसोपकारकत्वेनालङ्कारत्वं रसादिषु ॥

अपरे मुख्यया वृत्त्या काव्ये व्यवहरन्त्यपि।

गौणवृत्त्या रूपकादावजागलस्तनोपमम् ॥

एवं चेदुपकारित्वाच्छब्दार्थावप्यलङ्कृती।

तथा प्रामाणिकास्त्वत्र प्रथयन्ति निजं मतम् ॥

नूनं रसाभिव्यक्तिर्हि शब्दार्थद्वारतो भवेत्।

अभिव्यक्तः सोऽपि रसो ह्यपरस्य रसस्य च ॥

अभिव्यक्तौ कारणतां भजते नैव संशयः।

उपकारितया गौणो यश्चाभिव्यञ्जको रसः ॥

रसस्तथोपकार्यत्वान्मुख्योऽभिव्यक्त एव सः ।
उपकारमुखेनालङ्कारा रसवदादयः ॥
तदुक्तं ध्वनिकारेण ध्वन्यालोके स्वकं मतम् ।
"प्रधाने चैव वाक्यार्थे यत्राङ्गन्तु रसादयः ।
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः ॥"
समासोक्तौ नायिकादिव्यवहारो ह्यलङ्कृतिः ।
न स्यात्कदाचिदाद्यादौ लक्षणस्यासमन्वयात् ॥
अलङ्कारा रसाङ्गित्वे ध्रुवं रसवदादयः ।
उदात्ताद्याह्यलङ्कारा गुणीभूतरसादिषु ॥
उक्त कैश्चित्पुनश्चेन्थ समीचीनं न तद्भवेत् ।
प्राधान्ये हि रसस्यात्र रसादिध्वनिरीरिता ॥
अन्यथालङ्कृतित्वं ते प्राप्नुवन्ति रसादयः ।
कविराजैरेतदुक्तं निजसाहित्यदर्पणे ॥

सू०— नास्ति यद्यपि कश्चिद्वै विषयो यत्र नो भवेद् ।
ध्वनेश्च गौणव्यङ्ग्यस्य स्वप्रभेदादिभिः सह ॥
संसृष्टिः सङ्करो वापि तथापि नियमस्त्वयम् ।
"भवन्ति व्यपदेशा हि प्राधान्येनैव केवलम् ॥"
चमत्कारोऽतिशयितो यस्य यत्र भवेन्ननु ।
व्यवहार्यस्तत्र तेन सत्यं काव्यजगत्यपि ॥
जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया,
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।

कृताल ङ्काभर्तुर्वदनपरिपाटीषुघटना,
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता ॥
रामत्वमाप्तमित्यादेरप्रयोगेऽपि केवलम् ।
शब्दशक्तिमहिम्नैव ध्वनिमार्गानुसारतः ॥
नूनं पादत्रयद्योत्या सह रामेण सोपमा ।
अत्र वाच्यङ्गतां नीता रामशब्दप्रयोगतः ॥

आगत्य सम्प्रति वियोगविसंष्ठुलाङ्गी-
मम्भोजिनीं क्वचिदपि क्षपितत्रियामः ।
एतां प्रसादयति पश्य शनैः प्रभाते,
तन्वङ्गि पादपतनेन सहस्ररश्मिः ॥

अप्रकृतो वस्तुरूपो ह्यर्थशक्तिसमुद्भवः ।
नायकस्य च वृत्तान्तो नायिकायास्तथैव च ॥
स पादपतनेनेति प्रसादनस्वरूपधृक् ।
रवेश्च कमलिन्याश्च रश्मिनां पतनेन वै ॥
विकासनात्मके वाच्ये वृत्तान्ते निरपेक्षके ।
सुस्थितः सोऽध्यारोपेण पुनस्तस्याङ्गतां गतः ॥

वृ०— भ्रमिमरतिमलसहृदयता,
प्रलयं मूर्छां तमः शरीरसादम् ।
मरणं जलदभुजगजं,
प्रसह्य कुरुते विष वियोगिनीनाम् ॥

यावन्न विषशब्दस्य व्यङ्ग्यं हालाहलं भवेत् ।

तावद्भुजगरूपो हि वाच्यार्थोऽपि न सिध्यति ॥
एवं चात्र विपव्यङ्ग्यं वाच्यासिद्धिकरं परम् ।
गच्छाम्यच्युतदर्शनेन भवतः किं तृप्तिरुत्पद्यते,
किन्त्वेवं विजनस्थयोर्हतजनः सम्भावयत्यन्यथा ।
इत्यामन्त्रणभाङ्गिसूचितवृथावस्थानखेदालसा-
माश्लिष्यन् पुलकोत्कराञ्चिततनुर्गोपीं हरिः पातु वः ॥
यावदच्युतशब्दस्य न स्याद्व्यङ्ग्यमचञ्चलम् ।
तदामन्त्रणभङ्ग्यादिर्वाच्यार्थो नैव सिध्यति ॥
एवञ्च व्यङ्ग्यंवाच्यस्य तथैव सिद्धिकृन्मतम् ।
अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता ।
नादृष्टेन न दृष्टेन भवता लभ्यते सुखम् ॥
त्वमदृष्टो यथा न स्यां भयं न स्याद्वियोगजम् ।
तथा कुर्या इति व्यङ्ग्यं स्फुटमेव प्रतीयते ॥

हरस्तु किञ्चित्परिवृत्तधैर्य-
श्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे,
व्यापारयामास विलोचनानि ॥

प्रतीयमानमत्रैच्छद्दवरं परिचुम्बितुम् ।
व्यापारणं लोचनानामिति वाच्यमथो मतम् ॥
प्रधानमिति सन्देहो मानाभावे विदामपि ।
ब्राह्मणातिक्रमत्यागो भवतामेव भूतये ।

जामदग्न्यस्तथा मित्रमन्यथा दुर्मनायते ॥
जामदग्न्यो हि सर्वेषां क्षत्रियाणामिव क्षयम् ।
रक्षसामपि नूनं स क्षणादेव करिष्यति ॥
इति व्यङ्ग्यस्य वाच्यस्य तुल्यमेव प्रधानता ।

मथ्नामि कौरवशतं समरे न कोपात्,
दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।
सञ्चूर्णयामि गदया न सुयोधनोरू,
सन्धिं करोतु भवतां नृपतिः पणेन ॥

निषेधरूपवाच्येन सहैव यत्प्रतिष्ठितम् ।
मथ्नाम्येवेत्यादि व्यङ्ग्यं काकैवाक्षिप्यते हि तत् ॥

वाणीरकुडंगुड्डीणसउणिकोलाहलं सुणंतीए ।
घरकम्मवावडाए वहुए सीअंति अंगाइं ॥

कश्चन दत्तसङ्केतः प्रविष्टो हि लतागृहम् ।
व्यङ्ग्यादस्माद्वाच्यमेव सुचमत्कारकं खलु ॥
सीदन्त्यङ्गानीति मतं विबुधैस्तदसुन्दरम् ।

टि०—एते एव गुणीभूतव्यङ्ग्यभेदा न केवलम् ॥

का०—एषां भेदा यथायोगं वेदितव्याश्च पूर्ववत् ।

वृ०—व्यज्यन्ते वस्तुमात्रेण यदालङ्कृतयस्तदा ।
ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात् ॥

टि०—अलङ्कारान्तरस्यापि प्रतीतौ यत्र भासते ।
तत्परत्वं न काव्यस्य नासौ मार्गो ध्वनेर्मतः ॥

तावद्भुजगरूपो हि वाच्यार्थोऽपि न सिध्यति ॥
एवं चात्र विषव्यङ्ग्यं वाच्यसिद्धिकरं परम् ।
गच्छाम्यच्युतदर्शनेन भवतः किं तृप्तिरुत्पद्यते,
किन्त्वेवं विजनस्थयोर्हतजनः सम्भावयत्यन्यथा ।
इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसा-
माश्लिष्यन् पुलकोत्कराञ्चिततनुर्गोपीं हरिः पातु वः ॥
यावदच्युतशब्दस्य न स्याद्व्यङ्ग्यमचञ्चलम् ।
तदामन्त्रणभङ्ग्यादिर्वाच्यार्थो नैव सिध्यति ॥
एवञ्च व्यङ्ग्यंवाच्यस्य तथैव सिद्धिकृन्मतम् ।
अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता ।
नादृष्टेन न दृष्टेन भवता लभ्यते सुखम् ॥
त्वमदृष्टो यथा न स्यां भयं न स्याद्वियोगजम् ।
तथा कुर्या इति व्यङ्ग्यं स्फुटमेव प्रतीयते ॥

हरस्तु किञ्चित्परिवृत्तधैर्य-
श्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे,
व्यापारयामास विलोचनानि ॥

प्रतीयमानमत्रैच्छदधरं परिचुम्बितुम् ।
व्यापारणं लोचनानामिति वाच्यमथो मतम् ॥
प्रधानमिति सन्देहो मानाभावे विदामपि ।
ब्राह्मणातिक्रमत्यागो भवतामेव भूतये ।

जामदग्न्यस्तथा मित्रमन्यथा दुर्मनायते ॥
जामदग्न्यो हि सर्वेषां क्षत्रियाणामिव क्षयम् ।
रक्षसामपि नूनं स क्षणादेव करिष्यति ॥
इति व्यङ्ग्यस्य वाच्यस्य तुल्यमेव प्रधानता ।

मथ्नामि कौरवशतं समरे न कोपात्,
दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।
सञ्चूर्णयामि गदया न सुयोधनोरू,
सन्धिं करोतु भवतां नृपतिः पणेन ॥

निषेधरूपवाच्येन सहैव यत्प्रतिष्ठितम् ।
मथ्नाम्येवेत्यादि व्यङ्ग्यं काक्वैवाक्षिप्यते हि तत् ॥
वाणीरकुडंगुड्डीणसउणिकोलाहलं सुणंतीए ।
घरकम्मवावडाए वहुए सीअंति अंगाइं ॥
कश्चन दत्तसङ्केतः प्रविष्टो हि लतागृहम् ।
व्यङ्ग्यादस्माद्वाच्यमेव सुचमत्कारकं खलु ॥
सीदन्त्यङ्गानीति मतं विबुधैस्तदसुन्दरम् ।

टि०—एते एव गुणीभूतव्यङ्ग्यभेदा न केवलम् ॥

**का०—एषां भेदा यथायोगं वेदितव्याश्च पूर्ववत् ।**

सू०—व्यज्यन्ते वस्तुमात्रेण यदालङ्कृतयस्तदा ।
ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात् ॥

टि०—अलङ्कारान्तरस्यापि प्रतीतौ यत्र भासते ।
तत्परत्वं न काव्यस्य नासौ मार्गो ध्वनेर्मतः ॥

तावद्भुजगरूपो हि वाच्यार्थोऽपि न सिध्यति ॥
एवं चात्र विपव्यङ्ग्यं वाच्यासिद्धिकरं परम् ।
गच्छाम्यच्युतदर्शनेन भवतः किं तृप्तिरुत्पद्यते, .
किन्त्वेवं विजनस्थयोर्हतजनः सम्भावयत्यन्यथा ।
इत्यामन्त्रणभाङ्गिसूचितवृथावस्थानखेदालसा–
माश्लिष्यन् पुलकोत्कराञ्चिततनुर्गोपीं हरिः पातु वः ॥
यावदच्युतशब्दस्य न स्याद्व्यङ्ग्यमचञ्चलम् ।
तदामन्त्रणभङ्ग्यादिवाच्यार्थो नैव सिध्यति ॥
एवञ्च व्यङ्ग्यंवाच्यस्य तथैव सिद्धिकृन्मतम् ।
अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता ।
नादृष्टेन न दृष्टेन भवता लभ्यते सुखम् ॥
त्वमदृष्टो यथा न स्या भयं न स्याद्वियोगजम् ।
तथा कुर्या इति व्यङ्ग्यं स्फुटमेत्र प्रतीयते ॥

हरस्तु किञ्चित्परिवृत्तधैर्य–
श्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे,
व्यापारयामास विलोचनानि ॥

प्रतीयमानमत्रैच्छदधरं परिचुम्बितुम् ।
व्यापारणं लोचनानामिति वाच्यमथो मतम् ॥
प्रधानमिति सन्देहो मानाभावे विदामपि ।
ब्राह्मणातिक्रमत्यागो भवतामेव भूतये ।

वस्तु व्यङ्ग्यानलङ्कारान्ख्यानित्यव्यपदेशतः ।
नवानपास्य शिष्टान् द्विचत्वारिंशद्विधान् पुनः ॥
गुणीभूतव्यङ्ग्यभेदैरष्टाभिर्गुणितां स्तथा ।
रसकालाग्निसंख्याकान्वदन्ति विबुधासदा ॥

( ३३६ )

अन्योन्ययोजने तेषां निर्दिष्टानां पुनः पुनः ।
रसाङ्कवसुपक्षोर्मीमदिन्यश्च भवन्ति ते ॥

( ११२८९६ )

युगवस्विषुभूबाणवेदाः सङ्करतां गताः ।

( ४९१९८४ )

वियन्नेत्राङ्कभूबाणवेदाः शुद्धैः समं मताः ॥

( ४९१९२० )

सङ्कीर्णा हि ध्वनेर्भेदैः शरेषुयुगखेन्दुभिः ।

( १०४५५ )

खाकाशरसरामाब्धिवह्निद्वीपशरेषवः ॥

( ५५७३४३६०० )

सुधासागरकारेणाप्युक्तोऽसौ गणनाक्रमः ।
शुद्धैः सहैकपञ्चाशद्भेदैर्भेदा यथा ध्वनेः ॥
सङ्कीर्णाहि समाख्याता शरेषुयुगखेन्दवः ।

( १०४५५ )

शुद्धैः शरयुगव्यक्तैः सहात्रापि तथा बुधैः ॥

( ४५ )

अलङ्कातिरलङ्कृत्या यत्र यत्र प्रतीयते ।
ध्वनित्वं तत्र नैव स्याद्वाच्यालङ्कृतिसौष्ठवात् ॥

अलङ्कारेणापि वस्तुव्यञ्जने ध्वनिता पुनः ।
चमत्कारी यथा व्यङ्ग्यो न तथा वाच्यता गतः ॥

अतोऽपकर्षहेतुः सा वाच्यता नियता मता ।
व्यङ्ग्यतोत्कर्षहेतु श्च ध्वनिमार्गानुगामिनः ॥

यत्र व्यङ्ग्यं वस्तुमात्रमलङ्कारेण व्यज्यते ।
तद्वाच्यत्वेनापकर्षादलङ्कारस्य किञ्चन ।
व्यङ्ग्यत्वेनतथोत्कर्षाद्वस्तुनो ध्वनिता ध्रुवम् ।

**०—सालङ्कारैर्ध्वनेस्तैश्च योगः संसृष्टिसंकरैः ।**

०— अलङ्कारात्मतां प्राप्तैर्व्यङ्ग्यै रसवदादिभिः ।
वाच्यालङ्कारयुक्तैश्च गुणीभूतप्रभेदकैः ॥
चत्वारिंशद्विधैर्नूनं द्व्यधिकैर्ध्वनियोगतः ।
संसृष्टिसङ्करैः सार्धं भेदाः स्युर्बहवः पुनः ॥
तथोक्तं ध्वनिकारेण ध्वन्यालोके निजे यथा ।
" सगुणीभूतव्यङ्ग्यैः सालङ्कारैः सह प्रभेदैः स्वैः ।
सङ्करसंसृष्टिभ्यां पुनरप्युद्योतते बहुधा ॥"

**१०—अन्योन्ययोगादेवं स्याद्भेदसंख्यातिभूयसी ।**

९०—व्यञ्जको ह्यर्थशब्दत्वयुक्तत्रिमूर्तिः समुपासितः ।
पदे वाक्ये प्रबन्धे च सत्वात्म नवधा मतेषु ॥

वस्तु व्यङ्ग्यानलङ्कारान्ध्वानित्वव्यपदेशतः ।
नवानपास्य शिष्टान् द्विचत्वारिंशाद्विधान् पुनः ॥
गुणीभूतव्यङ्ग्यभेदैरष्टाभिर्गुणितां स्तथा ।
रसकालाग्निसंख्याकान्वदन्ति विबुधासदा ॥
( ३३६ )
अन्योन्ययोजने तेषां निर्दिष्टानां पुनः पुनः ।
रसाङ्कवसुपक्षोर्वीभेदिन्यश्च भवन्ति ते ॥
( ११२८९६ )
युगवस्विषुभूबाणवेदाः सङ्करतां गताः ।
( ४५१५८४ )
वियन्नेत्राङ्कभूबाणवेदाः शुद्धैः समं मताः ॥
( ४५१९२० )
सङ्कीर्णा हि ध्वनेर्भेदैः शरेषुयुगखेन्दुभिः ।
( १०४५५ )
खाकाशरसरामाब्धिवह्निद्वीपशरेषवः ॥
( ५५७३४३६०० )
सुधासागरकारेणाप्युक्तोऽसौ गणनाक्रमः ।
शुद्धैः सहैकपञ्चाशद्भेदैर्भेदा यथा ध्वनेः ॥
सङ्कीर्णाहि समाख्याता शरेषुयुगखेन्दवः ।
( १०४५५ )
शुद्धैः शरयुगव्यक्तैः सहात्रापि तथा बुधैः ॥
( ४५ )

गुणीभूतव्यङ्ग्यभेदा बाणाब्धीन्दुगजाः स्मृताः ।

( ७१४९ )

मध्यमोत्तमयोरेवं भेदयोर्गुणने पुनः ॥

भूताश्वाङ्केषुशरभूबाणस्तम्बेरमाः मताः ।

( ८९१९९२७९ )

चतुर्भिर्गुणने प्राग्वद्विज्ञेया गणकोत्तमैः ॥

ग्वाकाशाङ्काग्निपक्षर्तुव्योमवारिधिवह्नयः ।

( ३४०६२३९०० )

दिक्प्रदर्शनमेतच्चालङ्कारोद्भूतसङ्करैः ।

परार्धाधिकतां याति गणनेति न दर्शिता ॥

कुतः शरयुगत्वं हि प्राप्तं भीममहोदयैः ।

पूर्वं सङ्करतां प्राप्ता भेदाः सङ्करताम्पुनः ॥

कथ सम्प्राप्नुवन्तीति मनसोऽयमगोचरः ।

१०—शृङ्गारस्य यथा भेदप्रभेदगणने पुनः ॥

आनन्त्यं सम्भवेत्कानु सर्वेषां गणनां कथा ॥

दृष्टपूर्वा अपि ह्यर्था काव्ये रसपरिग्रहाव ।

सर्वे नवा इवाभान्ति मधुमास इव द्रुमाः ॥

अतो ह्यन्यतमेनापि प्रकारेण विभूषिता ।

वाणी नवत्वमायाति पूर्वार्थान्वयवत्यपि ॥

वाचस्पतिसहस्राणां सहस्रैरपि यत्नतः ।

निबद्धापि क्षयं नैति प्रकृतिर्जगतामिव ॥

संवादास्तु भवन्त्येव बाहुल्येन सुमेधसाम् ।
नैकरूपतया सर्वे ते मन्तव्या विपश्चिता ॥
संवादो ह्यन्यसादृश्यं त्रिधा तत्प्रतिबिम्बवत् ।
आलेख्याकारवत्तुल्यदेहिवच्च शरीरिणाम् ॥
त्याज्यं पूर्वमनन्यात्म तुच्छात्म च द्वितीयकम् ।
तृतीयं च प्रसिद्धात्म नान्यवद्धे त्यजेत्कविः ॥

अक्षरादिरचनेन योज्यते,
यत्र वस्तुरचना पुरातनी ।
नूतन स्फुरति काव्यवस्तुनि,
व्यक्तमेव खलु सा न दुष्यन्ति ॥

यदपि तदपि रम्य यत्र लोकस्य किञ्चित्-
स्फुरितमिदमितीयं बुद्धिरभ्युज्जिहीते ।
अनुगतमपि पूर्वच्छायया वस्तु तादृक्
सुकविरुपनिबध्नन्निन्द्यतां नोपयाति ॥
प्रतायन्तां वाचो निमितविविधार्थामृतरसा,
न वादः कर्तव्यः कविभिरनवद्ये स्वविषये ।
परस्वादानेच्छाविरतमनसो वस्तु सुकवेः,
सरस्वत्येवैषा घटयति यथेष्ट भगवती ।
ध्वनौ तथा गुणीभूतव्यङ्ग्यात्मनि निदर्शितम् ।
नमामोऽनन्त्यतां यन्तं कवीनां प्रतिभागुणम् ॥

× × × × ×

सू०— ध्वनेः सङ्कलनेनास्य त्रयो भेदाः प्रकीर्तिताः ।
व्यङ्ग्यस्य वस्त्वलङ्काररसरूपाच्च मुख्यतः ॥
तथाहि किञ्चिद्व्यङ्ग्यन्तु वाच्यतां सहते ध्रुवम्
किञ्चिच्च नैव सहते वाच्यतां वै कदाचन ॥
वाच्यतासहमप्यत्र द्विधाभूतं विलोक्यते ।
अविचित्रं वस्तुमात्रम लङ्कारं विनैव यत् ॥
तथालङ्कारमात्रञ्च विचित्रमिति कथ्यते ॥
यतं यद्यप्यलङ्कार्यं प्राधान्येन विचित्रकम् ॥
तथापि ब्राह्मणः कश्चिद्यथा श्रमणतां गतः ।
ब्राह्मणः कथ्यते लोकैः पूर्वप्रत्ययकारणात् ॥
तथैवेदमलङ्कार्यमलङ्कार इतीर्यते ।
रसादिरूपो व्यङ्ग्योऽर्थो वाच्यः स्वप्नेऽपि नो ।
यदि चेद्वाच्यतां गच्छेद्व्यङ्ग्योऽर्थोऽपि कथञ्चन
तदा रसादिशब्देन शृङ्गारादिपदेन वा ॥
उच्येत कुत्रचिन्नूनं किन्तु नैवाभिधीयते ।
विभावाद्यप्रयोगेऽपि रसादीनां प्रयोगतः ॥
व्यङ्ग्यस्यार्थस्य जायेत प्रतीतिर्न तु जायते ।
शृङ्गाराद्यप्रयोगेऽपि विभावादिप्रयोगतः ॥
रसस्य प्रतिपत्तिः स्यादन्वयव्यतिरेकतः ।
विभावादिमुखेनैव रसव्यक्तिः सुनिश्चिता ॥
तेनासौ व्यङ्ग्य एव स्यान्न वाच्यः सम्भवेदिति
नूनं विभावादीनान्तैस्तैर्वाचकपदादिभिः ॥

ह्यादिर्लक्ष्य एवास्तु लक्षणा न कथं तदा ।
क्षणासमये नूनं हेतुत्रयमपेक्ष्यते ॥
ख्यार्थबाधस्तद्योगो रूढिर्वाथ प्रयोजनम् ।
कुशलेत्यादि पदत्र ह्यत्र रूढिर्विलोक्यते ॥
ष्टीः प्रवेशयेत्यादाविव नात्र प्रयोजनम् ।
मुख्यार्थबाधाभावे नु सम्बन्धादेस्तु का कथा ॥
येन स्याल्लक्षणा, सापि विना व्यङ्गं न सम्भवेत् ॥
अविवक्षितवाच्ये हि लक्षणामूलके भिदि ॥
अर्थान्तरं सङ्क्रमिते वाच्ये त्वामस्मि पद्यके ।
वस्तुमात्रात्मकं व्यङ्ग्यं विना न लक्षणा भवेत् ॥
तथोपकृतमित्यादावत्यन्तं हि तिरस्कृतं ।
वाच्ये व्यङ्ग्यं विना नैव लक्षणा सम्भवेदिति ॥
नाभिधा समयाभावादित्यारभ्य द्वितीयके ।
महता वै प्रबन्धेन प्रागेव प्रतिपादितम् ॥
विवक्षितान्यवाच्येऽपि शब्दस्य शक्तिमूलके ।
संयोगाद्यैरुपायैश्च ह्यभिधाया नियन्त्रणे ॥
तथैवानभिधेयस्य नूनमर्थान्तरस्य च ।
सहैव तेनोपमादेरलङ्कारस्य वा पुनः ॥
व्यङ्ग्यत्वं निर्विवादं तदुक्तमेव तृतीयके ।
तथार्थशक्तिमूलेऽपि ह्यानन्त्यव्यभिचारतः ।
नूनं व्यक्तिविशेषे तु सङ्केतः सम्भवेन्नहि ॥
अतः स जातिरूपाणां पदार्थानां विधीयते ।

वाक्यस्थितपदानाञ्च स्वमर्थमभिधाय वै ॥
क्षीणायामभिधाशक्तौ व्यापाराभावतः पुनः ।
आकाङ्क्षाया योग्यतायाः सन्निधेर्वशतस्तथा ॥
परस्परस्य सम्बन्धो वाक्यार्थो योऽभिधीयते ।
तात्पर्यवृत्तिविज्ञेयः सोऽपि यत्रापदार्थकः ।
विशेषरूप एव स्यात्तत्रैवाभिहितान्वये ।
व्यङ्ग्यस्यात्राभिधेयत्वे का वार्ता तत्सुरक्षिता ॥

टि०—यतः पदेभ्यः प्रथम पदार्थानां स्मृतिर्भवेत् ।
सा तु तत्राभिधाशक्त्या, ततस्तात्पर्यवृत्तितः ॥
वाक्यार्थावगम. सोऽपि, नाभिधेयो यदा बुधैः ।
कथङ्कारं तदा व्यङ्ग्यो ह्यभिधेयो भवेदिति ॥
तथाऽन्विताभिधानेऽपि न भवेत्तस्य वाच्यता ।
'येऽप्याहु' रित्यनेनात्र तदेव प्रतिपाद्यते ॥

वृ०—शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति ।
श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया ॥
अन्यथानुपपत्त्या तु बोधेच्छक्तिं द्वयात्मिकाम् ।
अर्थापत्त्यावबोधेत सम्बन्धं त्रिप्रमाणकम् ॥

टि०—मीमांसामतमुद्धृत्य सुखं विवृणुतेऽधुना ।
प्रयोजकः प्रयोज्यश्च वृद्धावेतावुदीरितौ ॥
प्रयोजकस्तत्र वक्ता ह्युत्तमोऽप्यभिधीयते ।
श्रोता प्रयोज्यो विज्ञेयः स एव मध्यमः स्मृतः ॥

१०– वदत्युत्तमवृद्धो हि श्रोतारं मध्यमं पुनः ।
'गामानय, देवदत्त' शृणोति बालकोऽपि तत् ॥
विलोक्य मध्यमं वृद्धं द्रावबहिर्गमनोद्यतम् ।
तदा बालोऽनुमात्येष उत्तमोक्तमबोधि तत् ॥
सास्नादिमन्तमर्थञ्च देशाद्देशान्तरं ततः ।
आनीयमानमालोक्य वृद्धं मध्यमकं पुनः ॥
अस्माद्वाक्यादसावर्थः प्रतिपन्नोऽस्त्यनेन वै ।
इति तच्चेष्टया बालो वाक्यार्थमुपपद्यते ॥
तयोरखण्डवाक्यार्थवाक्ययोश्चापि तत्परम् ।
वाच्यवाचकसम्बन्धमर्थापत्त्या विनिर्णयेत् ॥
ततश्च 'नय गां चैत्र, देवदत्ताश्वमानय ।'
इति वाक्यप्रयोगेऽपि क्रियां तां तां विलोक्य वै ॥
एष चानयनस्यार्थो नयनस्याप्यसौ स्मृतः ।
तस्य तस्य च शब्दस्य तं तमर्थं हि बालकः ॥
अन्वयव्यतिरेकाभ्यामवधारयति ध्रुवम् ।
प्रवृत्तौ च निवृत्तौ च कारणं वाक्यमेव तत् ।
प्रयोगयोग्यमेवं स्याच्छास्त्रादाविति निश्चितम् ॥
वाक्यस्थितानां पदानामन्वितानां हि केवलम् ।
पदार्थैरन्वितैरेव सङ्केतो गृह्यते सदा ॥
परस्परं सुसम्बन्धाविशिष्टा एव सर्वथा ।
पदार्थाः स्याद्धि वाक्यार्थो विद्वद्भिरिति गीयते ॥

वैशिष्ट्यं नाम सम्बन्धः पदा
वाक्यार्थः सम्भवेन्नूनमिति मी

टि०—तात्पर्यवृत्त्यभावेन पदार्थाना परस्परम्
एव कृतेऽपि सम्बन्धाविशेषोऽशक्य ए

सू०—वाक्यान्तरे प्रयुक्तानि नयनादिपद
प्रत्यभिज्ञाप्रत्ययेन तान्येतानीति नि
पदार्थान्तरमात्रेण ह्यन्वितोऽसौ पदा
सङ्केतगोचरो नूनं यद्यप्यत्र मते भवे
सामान्यावच्छादितोऽसौ तथापि प्रति
नयनादेश्च सम्बन्धो सविशेषस्वरूपकः
सम्बद्धानां पदार्थानां तथाभूततया खलु
पदार्थो ननु सामान्यविशेषरूपको यदा ।
तेषामपि मते नूनं सङ्केतविषयो मतः ।
इत्थञ्चातिविशेषोऽयंसंकेतविरहाद पुनः ॥
वाक्यार्थान्तर्गतो यत्र पदार्थोऽवाच्य एव स
तत्रार्थान्तरभूतस्य नूनं विध्यादिकस्य च ।
निःशेषेत्यादिके स्थाने दूरे वाच्यत्वसकथा ॥
पूर्वं पदार्थविज्ञानं ततस्तात्पर्यवृत्तितः ।
भवेद्वाक्यार्थविज्ञानं प्रक्रमोऽभिहितान्वये ॥
तथान्विताभिधाने चावाच्योऽन्वितविशेषकः ।
पूर्वं वाक्यार्थविज्ञानं मिथः सम्बन्धकारणाद ॥

ततः पदार्थविज्ञानं भवतीत्येव निश्चितम् ।
एवमन्नोभयनये वाक्यार्थस्त्वपदार्थकः ॥
यदुच्यतेऽत्र विषये भट्टपादोपजीविभिः ।
ननु शब्दश्रुतेः पश्चाद्यावानर्थः प्रतीयते ॥
विज्ञेयस्तत्र सर्वत्र निमित्तं शब्द एव सः ।

टि०—व्यङ्ग्यस्यापि प्रतीतौ तच्छब्द एव निमित्तकम् ॥

वृ०—"नैमित्तिकानुसारेण निमित्तमपि कल्प्यते ।"
अयुक्तं तदिति प्रोक्तं साहित्यशास्त्रपारगैः ॥
भो भोः शब्दस्य तत्रार्थे निमित्तत्वं भवेन्नु किम् ?
कारकत्वं ज्ञापकत्वमथवेति निगद्यताम् ॥
प्रकाशकत्वाच्छब्दस्यानुत्पादकतया तथा ।
कारकत्वं निमित्तत्वं सम्भवेन्न कदाचन ॥
ज्ञापकत्वं द्वितीयन्तु लोकैरत्रानुमन्यते ।
किन्तु तज्ज्ञातमात्रस्य सदा सङ्केतवत्तया ॥
तदाऽऽज्ञातस्य शब्दस्य ज्ञापकत्वं भवेत्कथम् ?
सङ्केतेनैव ज्ञातत्वं स चाप्यान्वितमात्रके ॥
न त्वन्वितविशेषे वा न विध्यादावपि स्मृतः ।
तथा चैवं निमित्तस्य शब्दस्य परमार्थतः ॥
भवेद्यावन्न नियतनिमित्तत्वं विनिश्चितम् ।
तावन्नैमित्तिकस्यापि प्रतीतिः स्यात्कथं पुनः ॥
सङ्केतवशतः शब्दात्पदार्थोपस्थितिर्भवेत् ।

वैशिष्ट्यं नाम सम्बन्धः पदार्थानां न केवलम् ।
वाक्यार्थः सम्भवेन्नूनमिति मीमांसका जगुः ॥

टि०—तात्पर्यवृत्त्यभावेन पदार्थानां परस्परम् ।
एवं कृतेऽपि सम्बन्धाविशेषोऽशक्य एव चेत् ॥

सू०—वाक्यान्तरे प्रयुक्तानि नयनादिपदानि तु ।
प्रत्यभिज्ञाप्रत्ययेन तान्येतानीति निश्चयः ॥
पदार्थान्तरमात्रेण ह्यन्वितोऽसौ पदार्थकः ।
सङ्केतगोचरो नूनं यद्यप्यत्र मते भवेत् ॥
सामान्यावच्छादितोऽसौ तथापि प्रतिपद्यते ।
नयनादेश्च सम्बन्धो सविशेषस्वरूपकः ॥
सम्बद्धानां पदार्थानां तथाभूततया खलु ।
पदार्थो ननु सामान्यविशेषरूपको यदा ॥
तेषामपि मते नूनं सङ्केतविषयो मतः ।
इत्यश्चातिविशेषोऽयंसंकेताविरहात् पुनः ॥
वाक्यार्थान्तर्गतो यत्र पदार्थोऽवाच्य एव सः ।
तत्रार्थान्तरभूतस्य नूनं विध्यादिकस्य च ।
निःशेषेत्यादिके स्थाने दूरे वाच्यत्वमकथा ॥
पूर्वं पदार्थविज्ञानं ततस्तात्पर्यवृत्तितः ।
भवेद्वाक्यार्थविज्ञानं प्रक्रमोऽभिहितान्वये ॥
तथान्विताभिधाने चावाच्योऽन्वितविशेषकः ।
पूर्वं वाक्यार्थविज्ञानं मिथः सम्बन्धकारणात् ॥

ततः पदार्थविज्ञानं भवतीत्येव निश्चितम् ।
एवमत्रोभयनये वाक्यार्थस्त्वपदार्थकः ॥
यदुच्यतेऽत्र विषये भट्टपादोपजीविभिः ।
ननु शब्दश्रुतेः पश्चाद्यावानर्थः प्रतीयते ॥
विज्ञेयस्तत्र सर्वत्र निमित्तं शब्द एव सः ।

टि०—व्यङ्ग्यस्यापि प्रतीतौ तच्छब्द एव निमित्तकम् ॥

वृ०—" नैमित्तिकानुसारेण निमित्तमपि कल्प्यते ।"
अयुक्तं तदिति प्रोक्तं साहित्यशास्त्रपारगैः ॥
भो भोः शब्दस्य तत्रार्थे निमित्तत्वं भवेन्नु किम् ?
कारकत्वं ज्ञापकत्वमथवेति निगद्यताम् ॥
प्रकाशकत्वाच्छब्दस्यानुत्पादकतया तथा ।
कारकत्वं निमित्तत्वं सम्भवेन्न कदाचन ॥
ज्ञापकत्वं द्वितीयन्तु लोकैरत्रानुमन्यते ।
किन्तु तज्ज्ञातमात्रस्य सदा सङ्केतवत्तया ॥
तदाऽऽज्ञातस्य शब्दस्य ज्ञापकत्वं भवेत्कथम् ?
सङ्केतेनैव ज्ञातत्वं स चाप्यान्वितमात्रके ॥
न त्वन्वितविशेषे वा न विध्यादावपि स्मृतः ।
तथा चैवं निमित्तस्य शब्दस्य परमार्थतः ॥
भवेद्यावन्न नियतनिमित्तत्वं विनिश्चितम् ।
तावन्नैमित्तिकस्यापि प्रतीतिः स्यात्कथं पुनः ॥
सङ्केतवशतः शब्दात्पदार्थोपस्थितिर्भवेत् ।

पदार्थोपस्थितौ चात्र सङ्केतग्रह इष्यते ॥
स्यादन्योन्याश्रयो दोषस्तदुक्तमविचारितम् ॥

टि०—वाच्यार्थस्याभिधावृत्तिर्लक्ष्यार्थस्यापि लक्षणा ॥
काचिद्वृत्तिस्तु व्यङ्ग्यार्थे स्वीकार्यैव भविष्यति ॥
निमित्तत्वानिश्चयेन नो चेच्छब्दस्य कस्यचित् ।
नैमित्तिकोऽयं व्यङ्ग्यार्थो न सिध्यति भवन्मते ॥
निमित्तत्वं हि शब्दस्य व्यापारेण विनापि चेत् ।
अभिधालक्षणेऽप्यत्र स्यातां दत्तजलाञ्जली ॥
एवञ्च वृत्तिस्वीकारे व्यञ्जनैवोपयोगिनी ।
तद्भट्टलोल्लटादीनां मतमाशङ्क्यतेऽधुना ॥

सू०—धानुष्केनोत्तमेनात्र नूनं बलवता यथा ।
इषुर्वै प्रेरितः शत्रोर्वर्मच्छेदं विधाय सः ॥
मर्मभेदं विधत्ते च प्राणापहरणं पुनः ।
एकेन वेगाभिख्येन व्यापारेणैव केवलम् ॥
तथा कविप्रयुक्तो हि शब्दश्चापि कवेः कृतौ ।
एकेन चाभिधाख्येन व्यापारेणैव केवलम् ॥
पदार्थोपस्थितिं कुर्याद्वाक्यार्थमनुभावयेत् ।
व्यङ्ग्यप्रतीतिमपि च जनयत्येव सर्वदा ॥
एवञ्च नियता तत्र व्यङ्ग्यार्थस्यापि वाच्यता ।

टि०—कदाचिदुच्यते कैश्चि 'च्छब्दबुद्धिकर्मणाम् ॥
भवेद्विरम्य व्यापाराभाव' एव ततः स्फुटम् ।
वाच्यार्थमभिधायैव विरता ह्यभिधा पुनः ॥

न सा बोधयितुं शक्ता व्यङ्ग्यार्थस्यापि व्यञ्जने ।
तत्रापि श्रूयतामेतदस्मदुक्तं तदुत्तरम् ॥

सू०— 'प्रयुक्तो यत्परः शब्दः स शब्दार्थ' इति स्मृतः ।

टि०— व्यङ्ग्यतात्पर्यवच्छब्दस्तत्रार्थे विरतो भवेत् ॥

अनुपादयतानोचेद्रूथैवोन्मत्तवाक्यवत् ।
"तात्पर्यं व्यतिरेकाच्च व्यञ्जकत्वस्य न ध्वनिः ।
यावत्कार्यप्रसारित्वात्तात्पर्यं न तुलाधृतम् ॥"

एवं निःशेषप्रभृतौ विधेरेवात्र वाच्यता ।
तात्पर्यवाचोयुक्तेस्तद्देवानामेव ते प्रियाः ॥
तात्पर्यभूतमर्थं च वयं विज्ञापयाम वै ।

सू०— भूतं सिद्धं तथा भव्यं साध्यमित्यभिधीयते ।
तद्धि कारकरूपश्च क्रियारूपमपीष्यते ॥
तत्समुच्चारणे भूतं भव्यायैवोपदिश्यते ।
अमुं नियममाश्रित्य ते कारकपदार्थकाः ॥
नूनं क्रियापदार्थेनान्वीयमाना निरन्तरम् ।
मुख्यक्रियाया या चात्र क्रिया निवर्तिका स्वका ॥
तया सहाभिसम्बन्धाद्याति साध्यायमानताम् ।

टि०— यथा गामानयेत्यादौ गामित्यादय एव ते ॥
कारकाख्यपदार्था वै सम्बद्धा हि निरन्तरम् ।
सत्यं क्रियापदार्थेनानयनाद्यात्मना पुनः ॥
मुख्यक्रियाया नयनरूपाया या निवर्तिका ।

निजस्य धेनोश्चलनरूपा सम्बन्धतस्तया ॥
साध्या इव भवन्तीति मीमांसामतमांसलाः ।

सू०— अदग्धदहनन्यायाद्यावदप्राप्तमेव च ॥
तावद्विधीयते शास्त्रे ऋत्विक् प्रचरणे यथा ।
सति मानान्तरासिद्धे भो भो तात्पर्यतत्पराः ॥
यज्ञेऽत्र 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' वै ।
इत्यत्र लोहितोष्णीषमात्रत्वं हि विधेयकम् ॥
हवनस्यान्यतः सिद्धेस्तस्याप्राप्तेश्च केवलम् ।
'दध्ना जुहोति' चेत्यादौ दध्यादेः करणत्वकम् ॥
केवलं हि विधेयं स्यान्न जुहोतेः कदाचन ।
क्वचिदेकविधिश्चैव तथोभयविधिः क्वचित् ॥
क्वचिच्च त्रिविधिः प्रोक्तो यथा 'रक्तं पटं वय ।'
इत्यादौ रक्तपटयोः प्राप्तावेकविधिर्मतः ॥
पटस्य प्राप्तौ रक्तस्य वयनस्य तथा विधिः ।
त्रयाणां वा प्रकरणे त्रिविधिः समुदीरितः ॥
एवञ्च यद्विधेयं स्यात्तात्पर्यमपि तत्र वै ॥
उपात्तस्यैव शब्दस्य ह्यर्थे तात्पर्यमिष्यते ॥
न तु प्रतीतमात्रेऽपि तात्पर्यं सम्भवेत्खलु ।
यदा प्रतीतमात्रेऽपि तात्पर्यमुररीकृतम् ॥
तदा 'पूर्वो धावती' त्याद्यपरार्थेऽपि तत् पुनः ।
अपेक्षावशतो ननं तात्पर्यं स्यात्कदाचन ॥

"विषं भक्षय मा चास्य गृहे भुंक्थाः" ह्यनेन वै ।
एतद्गृहे न भोक्तव्यं तात्पर्यमिति निश्चितम् ॥
स्यात्स एव च वाक्यार्थ इति तात्पर्यवर्त्मगाः ।
चकारो विषमत्रैकवाक्यतासूचकः स्मृतः ॥
कल्प्यतेऽङ्गाङ्गिभावश्चेत्तदा स्यादेकवाक्यता ।
प्रधानवाक्ययोर्नूनं मिथश्च निरपेक्षयोः ॥
अङ्गाङ्गिभावो नैवेह कल्प्यते विबुधोत्तमैः ।
कल्प्योऽत्रयं मित्रवाक्यादुभयोर्वाक्ययोर्यतः ॥
नैवानुमनुते मित्रं सुहृदां विषभक्षणम् ।
इति मुख्यार्थबाधेन लक्ष्यतेऽर्थान्तरं ततः ॥
दुष्टमेतद्गृहस्यान्नं विषभक्षणतोऽधिकम् ।
स्यादेष एव लक्ष्यार्थो वाक्यार्थस्यात्र कारणम् ॥
एतद्गृहे न भोक्तव्यमित्यस्यैवेति मार्मिकाः ।
'सर्वथैतद्गृहे मित्र न भोक्तव्यं कदाचन ॥'
तात्पर्यमस्यवाक्यस्य गणयन्ति बुधोत्तमाः ।
भवत्तात्पर्यशब्दार्थोऽप्ययमेव विदन्तु भोः ॥
यदि 'शब्दश्रुतेः पश्चाद्यावानर्थः प्रतीयते ।
तावत्यर्थेऽपि व्यापारः स शब्दस्याभिधैव चेत् ॥
तदा 'ब्राह्मण पुत्रस्ते जातः कन्याथ गर्भिणी ।'
इत्यादावपि हर्षस्य शोकस्यापि च वाच्यता ॥
सम्भवेन्न कथं तत्राप्यभिधैवास्ति कारणम् ।
ततश्च लक्षणाप्यत्र नोपास्या वै कदाचन ॥

दीर्घदीर्घतरेणैवाभिधाव्यापारतः खलु ।
प्रतीतिसिद्धस्तत्रेति काव्यमर्मविचक्षणाः ॥
श्रुतेर्लिङ्गस्य वाक्यस्य तथा प्रकरणस्य च ।
स्थानस्य च समाख्याः भगवाञ्जैमिनिः पुनः ॥
पूर्वपूर्वबलीयस्त्वमिति किं प्रत्यपादयत् ।

टि०— सक्षेपादस्य सूत्रस्य ह्यर्थो निर्गलितोऽभवत् ॥
"एकद्वित्रिचतुष्पञ्चवस्त्वन्तरप्रकारितम् ।
श्रुत्यर्थं प्रति वैषम्यं लिङ्गादीनां प्रतीयते ॥
अतश्चैकवश्रुतिर्नित्यं समाख्या बाध्यते सदा ।
मध्यमाना तु बाध्यत्र बाध्यकत्वमपेक्षया ॥"
तदान्विताभिधानेऽपि वार्ता स्नातुमितो गता ।
नाधमान्तिकमित्यादौ सिद्धैव व्यङ्ग्यता विधेः ॥

वस्तुगत्या किन्त्व यदा तत्पदार्थान्तरेण यः ।
अन्वितः सोऽभिधाशक्त्या तथोपस्थाप्यते खलु ॥
' रुचिं कुरु ' सुशीलेऽत्र दुष्टं 'चिकु' पदं मतम् ।
गुह्याङ्गवाचकत्वेन स्त्रीणामिति सुनिश्चितम् ॥
भवन्मते भवेन्नैतद्दुष्टत्वं हि कदाचन ।
अनन्वितं तच्च पुनः पदार्थान्तरतो यतः ॥
ततः स्यादपरित्याज्यमिति काव्यविदां नयः ।
नन्वानुमात्रिकी शक्तिरन्वितेऽनन्विते पुनः ॥
स्मारिकाशक्तिरप्यत्र नूनं कार्यकरी मता ।

अश्लीलतास्मारकत्वाद्दुष्टं 'चिंकु' पदं ततः ॥
चेद्वाच्यवाचकत्वाव्यतिरेकेण वा पुनः ।
व्यङ्ग्यव्यञ्जकभावो हि कदाचिन्नाभ्युपेयते ॥
तदात्वसाधुतादीनां या मता नित्यदोषता ॥
कष्टत्वप्रभृतीनाञ्च तथैवानित्यदोषता ॥
विभागकरणञ्चात्रानुपपन्नं भवेत्किल ।
सर्वस्य दोषजातस्य स्पष्टतः प्रतिभासनात् ॥
नचास्त्यनुपपन्नं हि सुविभक्ततया तथा ।
वाच्यवाचकभावस्य व्यतिरेकेण सर्वथा ।
व्यङ्ग्यव्यञ्जकताभावाश्रयणे तु विचक्षणाः ॥
नूनं कष्टत्वदोषस्य व्यङ्ग्यस्यानेकतावशात् ।
रौद्रादौ गुणता प्रोक्ता शृङ्गारादौ च दुष्टता ॥
विभागस्य व्यवस्थैवमौचित्येनोपपद्यते ।

द्वयं गतं सम्प्रति शोचनीयतां,
समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावत-
स्त्वमस्य लोकस्य च नेत्र कौमुदी ॥

कपाल्यादिपदानाञ्च काव्यानुगुणता मता ।
पिनाक्यादिपदाश्चात्र प्रातिकूल्यं गताः कथम् ॥

टि०—वीरत्वव्यञ्जकत्वेन नानुकूलं पदं च तत् ।
महादेवस्य निन्दायां जुगुप्साव्यञ्जनात्मनः ॥

कपालीति पदस्यैव ह्यानुकूल्यं प्रतीयते ।
एवं काव्येऽथवा शास्त्रे भेदोऽस्ति व्यङ्ग्यवाच्ययोः ।
सू०—वाच्योऽर्थस्तु तथा सर्वान् प्रतिपत्तॄन् प्रति स्मृतः ।
एकरूपः सदैवातो नियतोऽसौ न संशयः ॥
पदार्थज्ञाननिपुणैर्वैयाकरणकोविदैः ।
'गतोऽस्तमर्क' इत्यादौ वाच्यो यः प्रतिपद्यते ॥
तदन्यथा भवेन्नैव कदाचित्क्वाचिदप्यहो ।
टि०—किन्तु केनापि कविना सूक्तं विषयेऽत्र वै ॥
"कवितास्वादसमये पदव्युत्पत्तिमात्रधीः ।
नीवीमोक्षणवेलायां यथा क्षौमर्घचिन्तनम् ॥"
आनन्दवर्धनाचार्या ध्वन्यालोके पुनर्जगुः ।
'शब्दार्थ शासनज्ञानमात्रेणैव न वेद्यते ।
वेद्यते स हि काव्यार्थतत्वज्ञैरेव केवलम् ॥"
प्रतीयमानस्तु सदा तत्तत्प्रकरणेन वै ।
सू०—बोद्धुः स्वरूपस्य तथा समयस्याश्रयस्य च ॥
निमित्तस्य च कार्यस्य संख्याया विषयस्य च ।
भेदाद्व्रजेत नानात्वं नैवायं नियतस्ततः ॥
यथा 'गतोऽस्तमर्को' यामित्यत प्रतिपद्यते ।
'सपत्नं प्रत्यवमरोऽवस्कन्दस्याय' मित्यपि ॥
'क्रियातान्चाभिसरणं' तथाभिसारिकाम्प्रति ।
'प्रासप्रायः प्रियस्तेऽद्य' कथमुद्विजसे सखि ॥

'कर्मणः करणान्नूनं तन्निवर्तामहे वयम् ।'
'उपक्रम्यो विधिः सान्ध्यो' भृत्यस्य धार्मिकम्प्रति ॥
कार्याद्बहिर्जिगमिषुं 'मा गाः दूरमितोऽधुना ।'
'गोपालक, प्रवेश्यन्तां शीघ्रं सुरभयो गृहम् ॥'
'नाधुना बाधते सत्यं सन्तापः' सुहृदं प्रति ।
'वस्तूनि संह्रियन्ताञ्च' वणिजः सेवकान् प्रति ॥
'नागतोऽद्यापि प्रेयान्म' इति प्रोषितभर्तृका ।
इत्थं वोद्धृविशेषेण व्यङ्ग्यस्त्वनवधिः सदा ॥
निःशेष' त्यादिपद्ये तु पूर्वत्रोदाहृते पुनः ।
गता स्नातुमितो वापीं नाधमस्यान्तिकं गता ॥
एवमत्र निषेधस्य विधिरूपेण वर्तनात् ।
असंशयं भवेद्भेदः सदैव वाच्यव्यङ्ग्ययोः ॥

मात्सर्यमुत्सार्य विचार्य कार्य-
मार्याः समर्यादमुदाहरन्तु ।
सेव्या नितम्बाः खलु भूधराणा-
मुत स्मरस्मेरनितम्बिनीनाम् ॥

अत्र चापाततो नूनं वाच्येन संशयात्मना ।
भूधराणां नितम्बास्तु सेव्याः शान्तैर्मनीषिभिः ॥
सेव्या विलासिनीनां च नितम्बा रसलोलुपैः ।
इति निश्चयरूपेण वाच्याद्व्यङ्ग्यो विभिद्यते ॥
कथमवनिप दर्पो यन्निशातासिधारा-
दलनगलितमूर्ध्ना विद्विषां स्वीकृता श्रीः ।

ननु तव निहतारेरप्यसौ किं न नीता,
त्रिदिवमपगताङ्गैर्वल्लभा कीर्तिरेभिः ॥
त्वयि जीवति सत्येव सदारक्षणतत्परे ।
हीनाङ्गैः शत्रुभिश्चैषा ह्रियते कीर्तिवल्लभा ॥
विप्रुषां विद्विषामत्र दर्पः श्रीहरणे कथम् ।
निन्दारूपेण वाच्येन शत्रुसंहारतः खलु ॥
त्रैलोक्यविश्रुताकीर्तिः स्तुतिरूपेण वर्णनात् ।
प्रतिभाति भवन् भेदो द्वयोर्हि वाच्यव्यङ्ग्ययोः
पूर्वं प्रतीतिर्वाच्यस्य व्यङ्ग्यस्य च ततः परम् ।
इति कालप्रभेदोऽपि स्पष्टतः प्रतिपद्यते ॥
शब्दाश्रयत्वं वाच्यस्य भवतीति सुनिश्चितम् ।
पदे तदंशे वाक्येऽर्थे वर्णे च रचने तथा ॥
आश्रयत्वाद्धि व्यङ्ग्यस्य भेद एवाश्रयस्य वै ।
शब्दानुशासनज्ञानमात्रेणैव स वेद्यते ॥
वाच्यो, व्यङ्ग्यस्तु प्रतिभानैर्मल्यसहितेन च ।
अतो निमित्तभेदोऽपि सिद्ध एव तयोः पुनः ॥
बोद्धृमात्रप्रतीते हि वाच्यस्य शब्दगस्य वै ।
कार्यस्य भेदो व्यङ्ग्यस्य चमत्कृतिकृतेस्तथा ॥
संख्याभेदो गतोऽर्कोऽस्तं प्रदर्शितनयेन च ।
कस्स व ण होइ रोसो दट्ठूण पिआइ सव्वणं अह
सभमरपउमग्घाइणि वारिअवामे सहसु एण्हिम्

सखीकान्तगतत्वेन भेदोऽत्र विषयस्य च।
नाभिधेयस्ततो व्यङ्ग्यो वाच्याद्भिन्नो विनिश्चितः॥
यदि प्रभूतभेदेऽपि ह्येकता वाच्यव्यङ्ग्ययोः।
तदा तु नीलपीतादावपि भेदो न सम्भवेत्॥
"अयमेव हि भेदो वा भेदहेतुश्च वा भवेत्।
विरुद्धधर्माध्यासो यद्भेदः कारणगश्च वै॥"

टि०—अनित्यवस्तुनोर्भेदे मता कारणभेदता।
विरुद्धधर्मवशतो भेदः स्यान्नित्यवस्तुनोः॥

सू०—अर्थं गृहीतसंकेतं वाचका बोधयन्ति हि।
अर्थापेक्षा वाचकानामत एव निगद्यते॥
वाणीरकुडंगुड्डीण सउणिकोलाहलं सुणंतीए।
घरकम्मवावडाए वहुए सीअन्ति अंगाइं॥
किञ्च वानीरकुञ्जेति गतः प्रेयांल्लतागृहम्।
प्रतीयमानमित्यर्थमभिव्यज्य ततः परम्॥
वाच्योऽर्थोऽङ्गावसादात्मा स्वस्मिन् विश्राम्यति ध्रुवम्।
असुन्दरे गुणीभूतव्यङ्ग्ये काव्येऽत्र मध्यमे॥
अर्थोऽतात्पर्यभूतोऽपि व्यङ्ग्यः सङ्केतरूपधृक्।
स्वशब्दानभिधेयोऽसौ प्रतीतिं जनयन्पुनः॥
विना व्यञ्जकवृत्तिं च कस्य वा विषयो भवेत्।
स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घनाः
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।

कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे,
वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव ॥
सम्पूर्णदुःखपात्रत्वं रामस्यापि च लक्ष्यते ।
प्रत्याख्यानरुचेः कृतं समुचितं क्रूरेण ते रक्षसा,
सोढं तच्च तथा त्वया कुलजनो धत्ते यथोच्चैः शिरः ।
व्यर्थं सम्प्रति बिभ्रता धनुरिदं त्वद्व्यापदां साक्षिणा
रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये नोचितम् ॥
रामेणेति पदेनात्र कातर्यं लक्ष्यते परम् ।
रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परा-
मस्मद्भाग्यविपर्ययाद्यदि परं देवो न जानाति तम् ।
वन्दीवैष यशांसि गायति मरुद्यस्यैकबाणाहति-
श्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिः ॥
खरदूषणहंतृत्वं रामोऽसाविति लक्ष्यते ।
अर्थोऽतो लक्षणीयोऽपि नानात्वं भजते पुनः ॥
अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम् ।
इत्यादिलक्षणामूले विशेषनामहेतुकः ॥
तदर्थात्ममस्त्रापि शब्दार्थायत्त एव सः ।
तथा प्रकरणादेर्हि सव्यपेक्षश्च विद्यते ॥
व्यङ्ग्यार्थस्यैव लक्ष्यस्यानियतत्वाद्विपश्चितः ।
सोऽयं प्रतीयमानो हि व्यापारो नूतनोऽस्ति भोः ?
अर्थस्य लक्षणीयस्य नानात्वेऽपि च सर्वदा ।

नियतत्वमनेकार्थशब्दस्येहाभिधेयवत् ॥
न चानियतसम्बन्धो मुख्येनार्थेन कर्हिचित् ।
शक्यो लक्षयितुं 'चास्तं गतोऽर्क' इति वत् पुनः ॥
नूनं प्रतीयमानस्तु सदा प्रकरणादिना ।
क्वचिन्नियतसम्बन्धोऽनियतोऽपि कदाचन ॥

तथा सम्बद्धसम्बन्धः साहित्ये द्योत्यते यथा ।
अत्ता एत्थ णिमज्जइ एत्थ अहं दिअसे एव पलोएहि ।
मा पहिअ रत्तिअंधिअ सेज्जाए मह णिमज्जहिसि ॥
शय्याप्रवेशरूपेऽत्र व्यङ्ग्ये वाच्यस्य सर्वदा ।

तदप्रवेशरूपस्य काव्यकोविदसत्तमैः ।
मतो नियतसम्बन्धः प्रसिद्धिवशतः खलु ॥
कस्स व ण होइ रोसो दट्ठूण पिआइ सव्वणं अहरं ।
सभमरपडमग्घाहिणि वारिअवामे सहसु एण्हिं ॥

'भ्रमरेणाधरो दष्टः न तूपपतिना पुनः ।
इति व्यङ्ग्येऽविनीतत्वरूपवाच्यस्य कश्चन ॥

नास्ति प्रसिद्धसम्बन्धः कल्पनीयो यतः स्मृतः ।
ततोऽनियत सम्बन्धो वर्ण्यते विबुधोत्तमैः ॥
विपरीअरए लच्छी बम्हं दट्ठूण णाहिकमलट्ठम् ।
हरिणो दाहिणणअणं रसाउला झत्ति ढक्केइ ॥
अत्र सम्बद्धसम्बन्धो व्यङ्ग्योऽर्थो वै प्रतीयते ।
हरेर्दक्षिणनेत्रं यत्सूर्यात्मकतया स्थितम् ॥

वामनेत्रञ्चेन्दुरूपं पुराणादिषु गीयते ।
नूनं हरिपदेनात्र व्यज्यते दक्षिणाक्षिणः ॥
सूर्यात्मकत्वं तस्यैव निमीलनवशात्पुनः ।
सूर्यास्तसमयस्तेन सङ्कोचः कमलस्य वै ॥
ब्रह्मणः स्थगनं तत्र सायं पद्मे निमीलिते ।
गोप्याङ्गस्यादर्शनेनानिर्बाधं रमणं ततः ॥
इत्थं सम्बद्धसम्बन्धः प्रतीतिपथगो भवेत् ।
विवक्षितान्यवाच्येऽत्र ध्वनावस्तीति पद्यके ॥
नहि मुख्यार्थबाधोऽस्ति लक्षणा कथमत्र तत् ।
तस्याश्च लक्षणाया वै तद्व्यञ्जनमपि पृथक् ॥
अवश्यमङ्गीकर्तव्यं द्वितीये प्रतिपादितम् ।
सू०— कदाचिद्ध्वननञ्चापि लक्षणात्मकमेव न ।
लक्षणानुगमेनैव व्यङ्ग्यस्य तस्य दर्शनात् ॥
न चानुगतमेव स्याल्लक्षणायाः कथञ्चन ।
अभिधालम्बनेनापि तस्य सद्भावतः खलु ॥
न द्वयोरनुसार्येव लक्षणाभिधयोः पुनः ।
अवाचकस्य वर्णस्यानुसारेणापि दर्शनात् ॥
न च शब्दानुसार्येव ध्वननं हि प्रतीयते ।
विकसन्नर्तकीनेत्रत्रिभागालोकनादिषु ॥
तस्य प्रसिद्धव्यङ्ग्यस्य चेष्टास्वपि च दर्शनात् ।
अभिधावृत्तितस्तद्वत्तात्पर्यवृत्तितस्तथा ।
लक्षणावृत्तितश्चापि व्यञ्जनं व्यतिरिच्यते ॥

टि०—क्रियाकारकभावं हि स्वीकृत्य व्यवहारधीः ।
सचापि सर्वदा धर्मधर्मिभावमपेक्षते ॥
जगतः सम्भवेन्नासौ मिथ्यात्वेन प्रकल्पनात् ।
ब्रह्मणो निर्गुणत्वाच्च तत्र सम्भावना कथम् ॥
अविशिष्टमपर्यायानेकशब्दप्रकाशितम् ।
एकं वेदान्तनिष्णातास्तमखण्डं प्रपेदिरे ॥
सर्वं ञ्च खल्विदं ब्रह्म नेह नानास्ति किञ्चन ।
एकमेवाद्वितीयं तदि—

सू०— त्यखण्डधिया पुनः ॥
**सुनिर्ग्राह्यः परब्रह्मस्वरूपो यो निगद्यते ।**
**वाक्यार्थ एव वाच्यार्थोऽखण्डं वाक्यं च वाचकम् ॥**

टि०—व्यङ्ग्येऽपि वाच्य एव स्यादिति वेदान्तिनां मतम् ।

**सू०—व्यवहारदशायान्तु कल्प्या पदपदार्थता ॥**

टि०—अन्यथा स्यान्न व्युत्पन्नाव्युत्पन्नव्यवहारधीः ।
तद्विशेषपदार्थोपस्थितिश्च न हि सम्भवेत् ।

**सू०—एवमुक्तोदाहरणे विन्ध्यादि र्व्यङ्ग्य एव सः ॥**

टि०—प्रकाशस्य प्रभावन्तु विरुद्धमवलोक्यते ।
वेदान्तभ्रान्तवादोऽयं नतु सिद्धान्तवादिनाम् ॥
गतार्थत्वाल्लक्षणया तदेतत्सुगमं मतम् ।
स्फोटेष्वष्टविधेष्वेव वाक्यस्फोटो विशिष्यते ॥

ब्राह्मणार्थो यथा नास्ति कश्चिद्ब्राह्मणकम्बले ।
देवदत्तादयो वाक्ये तथैव स्युरनर्थकाः ॥
परन्तु वैयाकरणै र्विद्वद्भिरपि कल्प्यते ।
प्रक्रियायां दशायान्तु नूनं पदपदार्थता ॥
उपायाः शिक्ष्यमाणानां बालानामुपलालना ।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते ॥
ननु वाच्यादसम्बद्धो ह्यर्थो नैव प्रतीयते ।
कुतश्चिद्यस्य कस्यापि प्रतीते र्हि प्रसङ्गतः ॥
एवं च नैवानियतात्सम्बन्धाद्धि कदाचन ।
व्यङ्ग्यव्यञ्जकभावोऽत्र भवतीति सुनिश्चितम् ॥
व्याप्तत्वेन तथैवात्र नियतत्वेन सर्वदा ।
एवमेव पुनर्धर्मिनिष्ठत्वेन तथैव च ॥
लिङ्गात्सपक्षसत्त्वादित्रिरूपाल्लिङ्गिनस्ततः ।
ज्ञानं तदनुमानेन जायते महिमन्मते ॥
भम धम्मिअ वीसद्धो सो सुणओ अज्ज मारिओ तेण ।
गोलाणई कच्छकुडङ्गवासिणा दरिअसिंहेण ॥
श्वनिवृत्त्या गृहे भीरुभ्रमणं विहितं हि तत् ।
गोदावरी नदीतीरे सिंहोपलब्धितस्ततः ॥
सर्वथाऽभ्रमणं तत्र ह्यनुमापयति स्फुटम् ।
यद्भीरुभ्रमणं तत्तु भयहेतोर्निवृत्तितः ॥'
सिंहोपलब्धिरीति च नूनं गोदावरीतटे ।

सद्भावश्च विरुद्धोऽन्यस्तिरस्कृतश्च निश्चितः ।

टि०—अनुमाने पुनर्हेतोः पक्षसत्त्वमपीष्यते ।
सपक्षसत्त्वमपि च व्यावृत्तत्वं विपक्षतः ॥

'पर्वतो वह्निमान् धूमादत्र धूमोऽस्ति कारणम् ।
पक्षभूते पर्वते वै सत्ता तस्यैव विद्यते ॥

महानसे सपक्षेऽपि धूमसत्ता ध्रुवं मता ।
महाह्रदाद्विपक्षाच्च व्यावृत्तत्वमभावतः ॥

लिङ्गादेवं विधान्नूनं लिङ्गिज्ञानं विनिश्चितम् ।
ततो वाच्यादसम्बद्धोऽर्थस्तावन्न प्रतीयते ॥

अन्यथातिप्रसङ्गः स्यादिति कारणतः खलु ।
अस्त्येव कश्चित्सम्बन्धोऽर्थयोः बोधकबोध्ययोः ॥

बोध्यो लिङ्गी बोधकश्च लिङ्गमित्यभिधीयते ।
अत्र पद्येऽस्ति सम्बन्धो वैपरीत्यं विदां मते ॥

अर्थस्य बोधकस्यात्र वाच्यरूपस्य सर्वदा ।
पक्षे धर्मिणि सत्ता वै धार्मिके तु विनिश्चिता ॥

सामर्थ्यादवसेये द्वे शिष्टेऽपि क्रमतः पुनः ।
वाच्यार्थाल्लिङ्गरूपात्तत् व्यङ्ग्यस्यार्थस्य लिङ्गिनः ।
यज्ज्ञानमनुमाने तत् पर्यवस्यति सर्वथा ॥

टि०—व्यभिचारी स हेतुस्तु विरुद्धोऽसिद्ध एव च ।
'अत्रोच्यते' हीत्यनेन तदेव प्रतिपाद्यते ॥

मू०— गुरोः प्रभोर्वा वाक्येन प्रियानुरागतोऽपि वा ।
अन्येनैवं विधेनैव निषिलाभादिहेतुना ॥
गोदावरीतटे भीरुर्हेतौ सत्यपि सम्भ्रमेत् ।
व्यभिचारी ततो हेतुरनैकान्तिकनामभाक् ॥
भीरुः शुनो बिभ्यदपि वीरतावशतः पुनः ।
बिभेति सिंहान्नैवात्र विरुद्धो हेतुरित्यपि ॥
न च गोदावरीतीरे प्रत्यक्षाद्वानुमानतः ।
निश्चितः सिंहसद्भावः कुत्र तद्भयकारणम् ॥
पुंश्चलीवचनादेव किन्तु सत्तावधारिता ।
तस्या न चास्ति प्रामाण्यं वचनस्य कथञ्चन ॥
सम्बन्धानियमादेव सममर्थेन सर्वदा ।
इत्यनेन प्रकारेण ह्यसिद्धो हेतुरुच्यते ।
कथमेवं विधाद्धेतोः साध्ये सिद्धिर्भवेत्सताम् ॥

टि०— व्यक्तिः कथं तत्र पुनश्चेत्येवं श्रूयतामिदम् ।

मू०— तन्निःशेषच्युतेत्यादौ प्रमाणत्वेन यान्यपि ॥
चन्दनच्यवनादीनि ह्युपात्तानीति तानि तु ।
कारणान्तरतोऽप्यत्र सम्भवन्ति कथञ्चन ॥
स्नानकार्यतयोक्तानि ह्युपभोगेन केवलम् ।
प्रतिबद्धान्यतस्तानि व्यभिचारीणि तान्यपि ॥
व्यक्तिरत्राधमपदसहायानां समीरिता ।

विशेषणानां निःशेषेत्यादीनां किन्तु नो मता ।
प्रमाणप्रतिपन्नं नो बाधकत्वं क्वचित्पुनः ॥
कोपाक्रान्तमनस्कायाः कामिन्याः स्वप्रियं प्रति ।
तथा चैवंविधादर्थो दर्थ एवंविधः पुनः ॥
व्याप्त्यादेरनपेक्षत्वेऽत्र नूनं प्रकाशते ।
वाक्येष्वनिश्चयाद्धेतोरनैकान्तिकता ध्रुवम् ॥

---

# काव्य-प्रकाशः

---

## षष्ठ उल्लासः ।

का०—शब्दार्थचित्रं यत्पूर्वं काव्यद्वयमुदाहृतम् ।
गुणप्राधान्यतस्तत्र स्थितिश्चित्रार्थशब्दयोः

वृ०—अचित्रत्वं न चार्थस्य शब्दचित्रे कथञ्चन ।
न चार्थचित्रे शब्दस्याचित्रत्वं विनिवेद्यते ॥

टि०—गौणमुख्यप्रभावेण न च सङ्करतानयोः ।
भवन्ति व्यपदेशा हि प्राधान्येनैव सर्वदा ॥
भामहोदितमप्यत्र स्वपुष्टावुद्धृतं यथा ।

सू०—"रूपकादिरलङ्कारस्तस्यान्यैर्बहुधोदितः ।
न कान्तमपि निर्भूषं विभाति वनितानन म् ॥
रूपकाद्यामलङ्कारा विद्भिर्बाह्याः समीरिताः ।
सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलङ्कृतिम् ॥
तदेदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी ।
शब्दाभिधेयालङ्कारभेदादिष्टं द्वयं तु नः ॥
प्रथममरुणच्छायस्तावत्ततः कनकप्रभः,
तदनु विरहोत्ताम्यत्तन्वीकपोलतलद्युतिः ।

उदयति ततो ध्वान्तध्वंसक्षमः क्षणदामुखे,
सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः ॥

टि०— उपमादौ प्रतीतायामपि शब्दार्थचित्रता ।
अनुप्रासस्य बाहुल्यादाम्नाति कवेः कृतौ ॥

उ०— ते दृष्टिमात्रपतिता अपि कस्य नात्र,
क्षोभाय पक्ष्मलदृशामलकाः खलाश्च ।
नीचाः सदैव सविलासमलीकलग्नाः,
ये कालतां कुटिलतामिव न त्यजन्ति ॥

टि०— गौणोऽत्र शब्दालङ्कारोऽनुप्रासो विबुधैर्मतः ।
समुच्चयालङ्कारस्य प्राधान्यादर्थचित्रता ॥

उ०— एवमेवान्ततो गत्वा कार्ये सर्वत्र यद्यपि ।
स विभावादिरूपेण रसो हि पर्यवस्यति ॥
तथाप्यनुपलम्भाद्धि स्फुटमत्र रसस्य वै ।
अव्यङ्ग्यमेतद्विद्वद्भिः काव्यद्वयमुदीरितम् ॥
अत्र शब्दार्थवैचित्र्यात्स्युर्भेदाः बहवः पुनः ।
निर्णेष्यन्ते तथास्माभिस्ते चालङ्कारनिर्णये ॥
व्योमाङ्कनिधिभूवर्षे माघे मासि सिते दले ।
तिथौ वसन्तपञ्चम्यामुदये पूर्णतामगात् ॥

---

## वंशप्रशस्तिः ।

सौभाग्यस्य निधिः श्रुतस्य वसतिर्विद्यावधूनां वरो,
लक्ष्म्याः केलिगृहं प्रसूतिभवनं शीलस्य कीर्तेः पदम् ।
शास्त्राचारगुरुः सदावनितले साहित्यचूडामणि-
र्निःसामान्यविकासया मतिभया जागर्ति वत्सान्वयः ॥

कुलक्रमेणाथ सुखोदयेऽस्मिन्,
श्रीमेदपाटावनिमातृगर्भे ।
लक्ष्मीनिवासैकमनाः स लक्ष्मी-
दासाभिधानाऽजनि वंशमूलम् ॥

विद्धः सुहृद्बान्धववाग्भिरेवशरैः सुतीक्ष्णैरिव सम्प्रयातः ।
श्रीविश्वनाथं विबुधैकवन्द्यं वाराणसीवासिनमाजगाम ॥
अधीतविद्यस्तत आशुतोषप्रभावतो भागवतो महात्मा ।
चचाल मन्त्रार्णवपारदृश्वा स्वमातृभूमेर्वदनं दिदृक्षुः ॥
काशीं परित्यज्य समापतन्तं मार्गेऽनुगच्छन् किल सप्तसप्तिः ।
तं भूसुरेन्द्रं गहने विहाय स्वमन्दिरं पूर्वमगाद्गहेशः ॥
लक्ष्मीदासो निशीथे लगुडसहचरः स्वाश्रयं काङ्क्षमाणो ।
लक्ष्मीनारायणस्तोन्नततरशिखरं मन्दिरं प्राप्य भव्यं ॥
लक्ष्मीदासैरशान्तैः कटुकथनपरैः सेवकैस्ताड्यमानो ।
द्वाःस्थस्तम्बेरमस्योदरतलपतितस्तां तमिस्रां निनाय ।
सम्प्राप्य वै राजसमुद्रबन्धमहोत्सवे मन्त्रबलेन सद्यः ।
धूमं वियद्व्यापिनमुद्गिरन्तं प्रज्वालयामास तमिद्धमग्निम् ।
चमत्कृतः शस्त्रभृतां वरेण्यो राजाधिराजः खलु राजसिंहः
सत्कृत्य तं वेदविदां वरेण्य सम्पूज्य वै व्यासपदेन भूयः ।
पुराणपारायणकृत्यनन्तरं सचामरं मत्तगजाधिरोहणम्
यात्रोत्सवे राजपथप्रवृत्ते समर्प्य वागोरपुरं न्यवर्तयत् ।
वेदत्रयी वाथ सुतत्रयी सा जाता जगद्व्यापियशःप्रसारा
ज्येष्ठस्ततो वल्लभरामवर्यस्तस्यात्मजः केशवदास आसीत् ।

जातः सुतो ज्येष्ठतरो हि रूपनामाभिधानो रमणीयरूपः
विद्याविलासव्यसनी सुचार्मी ततोऽजनि श्रीनरसिंहदासः ।
कालप्रभावेण सुपुष्पितासौ त्रिवेदिपूताङ्गणकल्पवल्ली ।
मनोरमं केशवरामभेकं प्रासूत सत्पुत्रफलं गुणाढ्यम् ॥
नवाणियाग्राममधिष्ठितः सन्निनाय नूनं कतिचिद्दिनानि ।
द्वितीयभावे समुपागते तु द्वितीयमाशिश्रियदाश्रमं सः ॥
भोदये सदाहं स्वयमर्जयित्वा निश्चित्य चैतन्नरसिंहसूनुः ।
जगाम पत्नीसहितः सहर्षं सेणारमालक्ष्य महान्तमर्थम् ॥
तस्यात्मजः पञ्चमवेदवेत्ता गङ्गाधरः पञ्चम एव पुत्रः ।
प्रापत्समृद्धोदयपत्तनेशश्रीसज्जनेन्द्रस्य पितुः पदाब्जम् ॥
प्रवीरवागोरपुराधिनाथं श्रीशक्तिसिंहं सुखदं शरण्यम् ।
संसेवमानो विधिवद्विधिज्ञः प्रसादपात्रत्वमवाप तस्य ॥
गोवर्द्धनं विज्ञजनाग्रगण्यं सौभ्रात्रहीनं सुगुणैरहीनम् ।
शृङ्गारदेव्याकरजं सुरत्नं प्राप्यैव पुत्रं मुमुदे निकामम् ॥

व्यासान्ववायवसुधात्रजमण्डनेन,
गोत्रेण वत्सपदपूतकलेवरेण ।
गोवर्द्धनेन सुहृदा विबुधादृतेन,
रत्नाकरे गिरिधरोपल एव लब्धः ॥

मेदपाटनरदेवसुमेधात्प्राप्य जीवनमसौ क्षितिदेवः ।
वर्धयन्नविरतं शिशुसस्यान्राजते समुदलं हृदयेऽत्र ॥
यमुनावल्लभ इत्युदाराचरोऽवरजोऽप्यस्य गुणैर्गुरुत्वमाप्तः ।
प्रचचालेह गुरून्विहाय सर्वान् यमुनापित्रतिथिःस सम्बुभूषुः ॥
लोके पितृत्वं स्वमनाप्य नूनं लोकान्तरे तत्प्रतिपत्तुमैच्छत् ।
सेर्ष्यावपत्ये पितरावपीतौ पदप्रतिष्ठापरिरक्षणाय ॥
ज्येष्ठे तपत्येव सुदीर्घकाले जाता कथं भ्रातृपदस्य पूर्तिः ।
प्रशंसितायामपि चित्रमस्यामस्तंगतोऽयं तरुणः सुधांशुः ॥
नियुध्य कालेन नितान्तमेको वीरोऽपि सुश्रान्तिमुपागतोऽस्मि ।
नारायणं शङ्करमाशु विज्ञं विधाय सर्वज्ञ विभो दयस्व ॥

# परिशिष्टम् १

## लक्षणाभेदाः ।

### १ मम्मटमतेन ।

| | |
|---|---|
| ुद्धो पादानलक्षणा | कुन्ता प्रविशन्ति |
| ुद्धा लक्षणलक्षणा | गङ्गाया घोष. |
| ुद्धा सारोपा ,, | आयुर्घृतम् |
| ुद्धा साध्यवसाना ,, | आयुरिदम् |
| ौणी सारोपा ,, | गौर्वाहीक· |
| गौणी साध्यवसाना | गौरयम् । |

### २ मुकुलभट्टमतेन । ( ३९ पृष्ठे )

| | |
|---|---|
| शुद्धो पादानलक्षणा | गौरनुबन्ध्यः |
| शुद्धा लक्षणलक्षणा | गङ्गाया घोष· |
| शुद्धा सारोपा | आयुर्घृतम् |
| शुद्धा साध्यवसाना, पाचाल | ( पञ्चालापत्यनिवासाधिकरणत्वाज्जनपदे प्रयोगः ) |
| ५ गौणी सारोपा | गौर्वाहीकः |
| ६ गौणी साध्यवसाना | राजा ( क्षत्रियेमुख्यया वृत्त्या प्रयुक्त· सन् शूद्रादौ क्षत्रिय गतजनपदपरिपालनयोगलक्षणापूर्वकया गौणवृत्त्या युज्यते ) अभिधावृत्तिमातृका |

## ३ विश्वनाथमतेन मुख्यभेदाः। ( ३५ पृष्ठे )

रूढौ—

| | |
|---|---|
| १ शुद्धोपादानसारोपा | श्वेतोऽश्वो धावति। |
| २ „ साध्यवसाना | श्वेतो धावति |
| ३ गौण्युपादानसारोपा | एतानि तैलानि हेमन्ते सुखानि |
| ४ „ साध्यवसाना | तैलानि हेमन्ते सुखानि |
| ५ शुद्धा लक्षणलक्षणासारोपा | कलिङ्गः पुरुषो युध्यते |
| ६ „ साध्यवसाना | कलिङ्गो युध्यते |
| ७ गौणी „ सारोपा | राजा गौडेन्द्रं कण्टकं शोधयति। |
| ८ „ „ साध्यवसाना | राजा कण्टकं शोधयति |

प्रयोजने—

| | |
|---|---|
| ९ शुद्धोपादानसारोपा | एते कुन्ताः प्रविशन्ति |
| १० „ साध्यवसाना | कुन्ताः प्रविशन्ति |
| ११ गौण्युपादान सारोपा | एते राजकुमाराः गच्छन्ति |
| १२ „ साध्यवसाना | राजकुमाराः गच्छन्ति |
| १३ शुद्धा लक्षणलक्षणा सारोपा | आयुर्घृतम् |
| १४ „ „ साध्यवसाना | गङ्गायां घोषः |
| १५ गौणी „ सारोपा | गौर्वाहीकः |
| „ „ साध्यवसाना | गौर्जल्पति। |

एषु प्रयोजने गूढा गूढ व्यङ्ग्यभेदेन षोडश, धर्मिधर्मगतत्वेन द्वात्रिंशत्, पदवाक्यगतत्वेन च चतुः षष्टिभेदाः। एवमेव रूढौ—

पदवाक्यगतत्वेन षोडश भेदाः भवन्ति । सङ्कलनेन तु अशीति भेदाः । साहित्यदर्पणः ।

### ४ अप्पयदीक्षितमतेन । ( ३६ पृष्ठ )

| | |
|---|---|
| १ निरूढा गौणी | लावण्यम् । |
| २ ,, शुद्धा | द्विरेफ-भ्रमर । |
| फललक्षणा ( प्रयोजनवती ) | |
| ३ शुद्धा जहल्लक्षणा (लक्षणलक्षणा) | गङ्गायां घोष |
| ४ ,, अजहल्लक्षणा (उपादान०) | कुन्ता. प्रविशन्ति । |
| ५ ,, जहदजहल्लक्षणा | ( अर्धेऽपि ज्वलिते ) ग्रामोदग्ध |
| ६ ,, सारोपा | भगवानानन्दः |
| ७ ,, साध्यवसाना | अयमानन्दः । |
| ८ ,, गौणी सारोपा | गौर्वाहीकः |
| ९ ,, साध्यवसाना | एतदन्तरिक्षम् |
| | वृत्तिवार्तिकम् । |

### ५ जगन्नाथमतेन । ( ३६ पृष्ठ )

निरूढा—

प्रयोजनवती

१ गौणी सारोपा

२ ,, साध्यवसाना

३ शुद्धा जहत्स्वार्था

शुद्धा अजहत्स्वार्था
,, सारोपा
,, साध्यवसाना

रसगङ्गाधरः

## ६ नागेशभट्टमतेन। ( ३६ पृष्ठे )

| | |
|---|---|
| १ शुद्धा | ( अभिधायाः नामान्तरम् । ) |
| २ गौणी जहत्स्वार्था | गौर्वाहीकः |
| ३ ,, अजहत्स्वार्था | कुन्ताः प्रविशन्ति ( मम्मटमते शुद्धोपादानलक्षणाया उदाहरणम् ।) |
| ४ ,, जहदजहत्स्वार्था | ग्रामोदग्धः |
| ५ ,, लक्षितलक्षणा | द्विरेफः ( एषएवाप्पयदीक्षितेन निरूढायाः शुद्धाया उदाहरणत्वेनोपन्यस्तः ) |

परमलघुमञ्जूषा ।

## ७ अच्युतरायमतेन। ( ३७ पृष्ठे )

गौणी—

| | |
|---|---|
| १ निरूढा | कुशल |
| २ प्रयोजनवतीसारोपा | गौर्वाहीकः |
| ३ ,, साध्यवसाना | गौरयम् । |

शुद्धा

| | |
|---|---|
| ४ ,, निरूढा | नील |

| | | |
|---|---|---|
| ५ | शुद्धा प्रयोजनवती सारोपा | आयुर्घृतम् |
| ६ | ,, ,, साध्यवसाना | आयुरिदम् |
| ७ | ,, ,, जहत्स्वार्था | गङ्गायां घोषः |
| ८ | ,, ,, अजहत्स्वार्था | श्वेतो धावति |
| ९ | ,, ,, जहदजहत्स्वार्था | त्वं मः ( अंशेऽपि ) |
| | विरुद्धा | |
| १० | ,, ,, निरूढा | (कलङ्केऽपि चन्द्रमसि अगाधाय)दृशः |
| ११ | ,, प्रयोजनवती | ( अधन्येऽपि ) स्वधन्यः । |
| | लक्षितलक्षणा | |
| १२ | निरूढा | द्विरेफः |
| | ,, प्रयोजनवती | वैदेही |

साहित्यसारः ।

## परिशिष्टम् २

### ध्वनिभेदाः

१ पदगतोऽर्थान्तरसङ्क्रमितो विवक्षितवाच्यध्वनिः ।
२ वाक्यगतो ,, ,, ध्वनिः ।
३ पादगतोऽत्यन्ततिरस्कृतो ,, ध्वनिः ।
४ वाक्यगतो ,, ,, ध्वनिः ।
५ पदगतः शब्दशक्तिमूलः संलक्ष्यक्रमो वस्तु ध्वनिः ।
६ ,, ,, ,, अलङ्कार ध्वनिः ।
७ वाक्यगतः ,, ,, वस्तुध्वनिः ।

| | | | | |
|---|---|---|---|---|
| ८ | वाक्यगतः | शब्दशक्तिमूल संलक्ष्यक्रमः | | अलङ्कारध्वनिः । |
| ९ | पदगतः | स्वतःसिद्धार्थशक्तिमूलो | वस्तुना | वस्तुध्वनिः । |
| १० | ,, | ,, | ,, | अलङ्कारध्वनिः । |
| ११ | ,, | ,, | अलङ्कारेण | वस्तुध्वनिः । |
| १२ | ,, | ,, | ,, | अलङ्कारध्वनिः । |
| १३ | वाक्यगतः | ,, | वस्तुना | वस्तुध्वनिः । |
| १४ | ,, | ,, | ,, | अलङ्कारध्वनिः । |
| १५ | ,, | ,, | अलङ्कारेण | वस्तुध्वनिः । |
| १६ | ,, | ,, | ,, | अलङ्कारध्वनिः । |
| १७ | प्रबन्धगतः | ,, | वस्तुना | वस्तुध्वनिः । |
| १८ | ,, | ,, | ,, | अलङ्कारध्वनिः । |
| १९ | प्रबन्धगतः | स्वतःसिद्धार्थशक्तिमूलः | अलङ्कारेण | वस्तुध्वनिः । |
| २० | ,, | ,, | ,, | अलङ्कारध्वनिः । |
| २१ | पदगतः | कविप्रौढोक्तिसिद्धार्थशक्तिमूलः | वस्तुना | वस्तुध्वनिः । |
| २२ | ,, | ,, | ,, | अलङ्कारध्वनिः । |
| २३ | ,, | ,, | अलङ्कारेण | वस्तुध्वनिः । |
| २४ | ,, | ,, | ,, | अलंकारेणध्वनिः । |
| २५ | वाक्यगतः | ,, | वस्तुना | वस्तुध्वनिः । |
| २६ | ,, | ,, | ,, | अलंकारध्वनिः । |
| २७ | ,, | ,, | अलंकारेण | वस्तुध्वनिः । |
| २८ | ,, | ,, | ,, | अलंकारध्वनिः । |
| २९ | प्रबन्धगताः | ,, | वस्तुना | वस्तुध्वनिः । |

३० प्रबन्धगत कविप्रौढोक्तिसिद्धार्थशक्तिमूल वस्तुना अलङ्कारध्वनि।
३१ ,, ,, अलङ्कारेण वस्तुध्वनि।
३२ ,, ,, ,, अलङ्कारध्वनि।
३३ पदगत कविनिबद्ध प्रौढोक्ति सिद्धार्थशक्तिमूल वस्तुना वस्तुध्वनि।
३४ ,, ,, ,, अलङ्कारध्वनि।
३५ ,, ,, अलङ्कारेण वस्तुध्वनि।
३६ ,, ,, ,, अलङ्कार ध्वनि।
३७ वाक्यगत कविनिबद्ध प्रौढोक्तिसिद्धार्थ शक्तिमूल वस्तुना वस्तुध्वनि
३८ ,, ,, ,, अलङ्कार ध्वनि
३९ ,, ,, अलङ्कारेण वस्तुध्वनि
४० ,, , ,, अलङ्कार ध्वनि
४१ प्रबन्धगत ,, वस्तुना वस्तुध्वनि।
४२ ,, ,, ,, अलङ्कार ध्वनि
४३ ,, ,, अलङ्कारेण वस्तुध्वनि
४४ ,, ,, ,, अलङ्कार ध्वनि
४५ वर्णगतोऽसंलक्ष्यक्रम व्यङ्ग्यो रसादि ध्वनि।
४६ पदैकदेशगतो ,, ,, ।
४७ पदगतो ,, ,, ।
४८ वाक्यगतो ,, ,, ।
४९ रचनागतो ,, ,, ।
५० प्रबन्धगतो ,, ,, ।
५१ वाक्यगत शब्दार्थोभयशक्तिमूलो ध्वनि।

# परिशिष्टम् ३

**ध्वनिभेदाः—**

५१ स्वभेदैः सह गुणनम् ।

५१

५१

२५५

२६०१ संकलनम्

४ संकरसंसृष्टिभ्यां गुणनम्

१०४०४

५१ शुद्धभेदैः सह संयोजनम्

१०४५५

**गुणीभूतव्यङ्ग्यभेदाः—**

४२

८

३३६ स्वभेदैः सह गुणनम्।

३३६

२०१६

१००८

१००८

११२८९६ संकरसंसृष्टिभ्यांगुणनम्

४

४५१५८४ शुद्धभेदैः सह संयोजनम्

३३६

४५१९२०

# सम्मतयः ।

॥ श्रीः ॥

काव्यप्रकाशविवृतिं सरलां मनोज्ञाम्,
छन्दोमयीं विबुधबोध्यगभीरभावाम् ।
विद्वद्वरो गिरिधरो विरचय्य मन्येऽ-
लङ्कारशास्त्रसरणिं सुगमां वितेने ॥

श्रीप्रमथनाथतर्कभूषणशर्मा
( महामहोपाध्यायः )
प्रिन्सिपल संस्कृतकालेज हिन्दूविश्वविद्यालय काशी ।

॥ श्रीः ॥

उदयपुरवासिना कोविदवरेण श्रीगिरिधरलालशर्मणा विनिर्मितं काव्य-प्रकाशस्य पद्यमयं व्याख्यानमवलोक्य प्रमोदमनुभवामि । अत्र हि कोमलानि स्फुटार्थानि च वीक्ष्यन्ते पद्यानि । एतदभ्यासेनान्तेवासिनां मनांसि नूनमधिष्ठातुमर्हन्ति काव्यप्रकाशप्रतिपादिता विषयाः । गद्यमपेक्ष्य पद्यस्याभ्यासोऽपि सौकर्येण भवतीत्ययं प्रबन्ध उपादेय एवेति—

२६-७-२३
विश्वविद्यालयः, काशी

बालकृष्णमिश्रः
( सर्वतन्त्रस्वतंत्रः )

श्रीरामः शरणम् ।

( आशीः, प्रशस्तिपत्रम् )

दुरूहग्रन्थविवृतिः प्रायः पद्यैर्न दृश्यते ।
छन्दोऽनुबन्धिसम्बन्धबन्धनिर्बन्धबन्धुरैः ॥
काव्यप्रकाशविवृतिः सरला बालेव पद्यरूपाद्य
गिरिधरलालव्यासं व्यासमीम्याकरोत्पितरम् ॥

दृष्टाल्पांशोऽपि शंसामि प्रकाशकृतितां कवेः ।
अबालस्योदयस्थस्य सौम्यसद्भावशालिनः ॥
शर्वरीगर्वनिर्वापि-कराङ्कुरनिरीक्षकः ।
रवेर्वेत्ति बालोऽपि प्रकाशबहुलोदयम् ॥
बिन्दुमात्रं जलं पीत्वा ज्ञायते सरसो रसः ।
अथ न ज्ञायते कृत्स्नपानेऽप्येपैव मन्दता ॥
यथा गर्भगतो बालो मणिर्वा खनिमध्यगः ।
तथा गूढप्रकाशोयं संस्कृतव्यक्तिमृच्छतु ॥
उदयपुरनरेशलब्धवृत्तेर्गिरिधरलालकवेर्नवेऽत्र कृत्ये ।
मतिमत्तिरचिरामवेत्य तं, तत्प्रभुमपि भूपतिमाशिषा युनज्मि ॥
नानादर्शनपरमाचार्यः सर्वतन्त्र स्वतन्त्रः

श्रीपञ्चानन तर्करत्नः

॥ श्री ॥

श्रीशास्त्रिणा गिरिधरेण सुनिर्मितेयम्
पद्यात्मिका सुविशदा स्फुटग्रन्थसारा ॥
साहित्यदर्शनविवेकिकृतोपकारा
काव्यप्रकाशविवृतिर्विदुषां मुदे स्तात् ॥

गङ्गाधरशास्त्री
अध्यापकः
राजकीय संस्कृत कालेज, बनारस ।

महाराणासंस्कृतकलाशालासाहित्याध्यापकः श्रीमान् पं० गिरिधरलाल-शर्मव्यासः काव्यप्रकाशं प्रौढैः प्रसन्नैर्गम्भीरैश्च वाक्यैरवयवश आख्यान-वानस्ति । विशेषविदुषोऽस्याभिनवेयं लेखनशैली विस्मयमादधाति । अत्र हि पद्यमय्यां वाचि प्रकाशकारगूढाशयं प्रदीपप्रभासुधोतद्युतिञ्च निपुणं निचाय्य पण्डितराजपरिष्कृतयो विश्वनाथसमालोचनाश्चापि स्फुटं निवेशिताः सन्ति ।

अल्पीयसीभिरतिस्फुटाभिः कारिकाभिरेतावतां वस्तुजातानां प्रकाशनमिति लेखकस्यास्य सहृदयतां क्रान्तदर्शनताञ्च ग्रन्थस्यास्योपादेयतया सह दृढं प्रमाणयन्ति –

कालीप्रसादशर्ममिश्रः
व्याकरणप्रधानाध्यापकः
संस्कृतकॉलेज, हिन्दूविश्वविद्यालय, काशी ।

॥ श्रीः ॥

उदयपुरपत्तनस्थ पं० श्रीगिरिधरशर्मनिर्मितां पद्यमयीमपेक्षितविविधविषयालंकृतां ग्रन्थाशयं सरलेन स्फुटं प्रकाशयन्तीं काव्यतत्वजिज्ञासूनामन्तेवासिनां कृते काव्यलतामिवेमां काव्यप्रकाशटीकां दर्शंदर्शमतीव हृष्यति मे चेतः । इयं च न केवलं विद्यार्थिनामेवापि तु विदुषामप्युपकुर्वती लोकप्रथिता भवेदिति मे दृढो विश्वासः ।

वामदेव मिश्रः
सा० प्र० ध्या०
हि० वि० वि० का० ।

॥ श्रीः ॥

श्रीमद्गिरिधराख्येन विदुषातिमनोहरा ।
काव्यप्रकाशव्याख्येयं पद्यरूपेण निर्मिता ॥ १ ॥
छात्राणामुपकाराय विज्ञानां प्रीतिवृद्धये ।
लोके प्रचलिता सेयं भवितेति विनिश्चयः ॥ २ ॥

७–९–३२
हिन्दूविश्वविद्यालय काशी

अम्बिकाप्रसाद शर्म्मा
व्याकरणाचार्यः

विद्वद्वरश्रीमद्गिरिधरलालशर्मसाहित्यशास्त्रिमहोदयैर्निर्मितायाः पद्यमय्या अपि झटिति बोधमुपजनयन्त्याः साहित्यीयऽङ्कुरविचाराञ्चिताया साहित्यतत्त्वमधिजिगांस्यमानानां नितान्तमुपकारिण्याः समधिगतसाहित्यतत्वानामपि सम्मदसन्ततिमातानयन्त्याः सुलभबोधदर्पणायमानायाः काव्यप्रकाशव्याख्यायाः कियदुपादेयत्वमिति दर्शनसमनन्तरमेव विज्ञा विज्ञास्यन्तीति नात्राधिकमलं वक्तव्यं 'न हि कस्तूरिकामोदः शपथेन विभाव्यत' इति । प्रत्यक्षगोचरवस्तुसत्त्वशब्दवर्णननिष्फलत्वस्य स्फुटं प्रतीयमानत्वादिति विज्ञापयति—

मार्कण्डेयमिश्रः

प्रधानाध्यापकः

नाथद्वारीयगोवर्द्धनसंस्कृतपाठशालायाः ।

महाराणासंस्कृतकालेजसाहित्याध्यापकेन पण्डितगिरिधरलालव्यासेन शास्त्रिणा "काव्य प्रकाशे" प्रतिपादिताः समत-मतान्तराः सोद्धरणाश्च कृतान्ताः पद्यमयीभि ( कारिकाभि ) रेवापञ्चमसमुल्लासं संक्षिप्ता परीक्षाः समुत्तितीर्षुभ्योऽन्तेवासिभ्यो भवेयुरतितरामुपादेया इत्याशासे ।

यतो हृदयङ्गमोऽत्र रसनिरूपणप्रकारः, सुविशदो ध्वनिस्फोटविवेचनविधिः, पेलवो हि व्यञ्जनाव्यञ्जनमार्गः, भावग्राही लक्षणालक्ष्यलक्षणसमुद्देशः, अल्पबुद्धिसाध्यश्च भावानुप्रवेश ।

क्लिष्टशब्दगुम्फिताभिः दुरधिगम्यभावाभिः गद्यपद्यमयीभिः भाषाभिः निरूपितान्, ऋजुमतिदुरूहान्, राद्धान्तान्, सरलात्मिकाभिः कारिकाभिः संकलयतानेन बालबुद्धिभ्यो विद्यार्थिभ्यो महदुपकृतमिति मन्ये ।

रामसुन्दरशास्त्री

संस्कृताध्यापकः

महाराणा कॉलेज, उदयपुर ।

॥ श्री विश्वनाथः शरणम् ॥

अयं स्वाधीतग्रन्थेषु महान्तं श्रममाचरन् ।
पद्यबद्धं सुसरलं बुधानामामोदहेतवे ॥
व्यासोपाह्वो गिरिधरच्छात्रोपकृतिगर्भितम् ।
अहो काव्यप्रकाशस्य टिप्पणं यं व्यरीरचत् ॥
दर्शं दर्शममुं ग्रन्थं काव्यतत्त्वभरा नराः ।
जायन्ते नात्र सन्देह इत्ययं मनुतेतराम् ॥

मिश्रोपाह्व रामचन्द्रशर्मा
प्रधानाध्यापकः
श्रीफतहभूपाल महाविद्यालय, उदयपुर ।

॥ श्रीः ॥

अयं प्रकाशविवृत्यलङ्कृतः प्रकाशो नितरां प्रमोदयति मे स्वान्तम् दुरूहस्याऽस्य ग्रन्थस्य मर्मावबोधो बुधानामपि क्षटित्यसम्भवः प्रदीपादितद्व्याख्याऽपि सुतरां दुरूहाऽतोऽस्य सर्वजनमनोरञ्जनी व्याख्यापेक्षितैनया विद्वद्वरनिर्मितया प्रकाशितः प्रकाशो मन्दानप्युपकरिष्यतीति मन्यते—

काशीस्थमारवाड़ीसंस्कृतकालेजाध्यापको
नारायणदत्तशर्म्मत्रिपाठी ।

अतिसंक्षिप्तदुरूहत्वेऽपि सारगर्भितस्यास्य काव्यप्रकाशस्य विवरणात्मकसरलतरसुरसपद्यात्मकनिबन्धदर्शनादस्माकं प्रमोदाकुलितमिव सम्पन्नमान्तरं करणमिति सुतरां संख्यावतां संख्यावतामप्रतिमप्रमोदमनतिप्रौढमतीनां काव्यगोचरव्युत्पत्त्यतिशयमाधास्यतीत्यध्यवस्यति—

पद्मप्रसादो न्यायाचार्यः, मा० सं० का० काशी
का० कृ० ७।१९९०

दुरवबोधस्यास्य ग्रन्थस्यातिप्रगल्भासु प्रदीपादिव्याख्यासु सतीषु निष्प्रयोजनयाऽतिसुकुमारमतीनामप्यधिकतरव्युत्पत्त्या धायकत्वेन समापेक्षितयैनया प्रकाशविवृत्या मण्डितोऽयम्प्रकाशो नितराम्प्रकाश ( ह्लाद )-यति मे मानसमिति ।

शिवमङ्गलद्विवेदो न्यायाचार्यः

मा० स० कॉलेज मीरघाट, काशी ।

हृद्यपद्यावबद्धतया विद्वन्मुदप्रवर्धिनीयमस्य ग्रन्थस्य व्याख्याप्रकाशविवृतिः सत्स्वपि व्याख्यान्तरेषु प्रायः पद्यात्मकव्याख्यानामनुपलाभेनाद्वितीयतां गताऽस्तीव मे मानसं प्रमोदयति काव्यव्युत्पत्तिवृद्धिजनकतया चान्तेवासिनामपि समुपकारिणी स्यादिति ।

भास्करानन्दपर्वतीयो

व्याकरणाचार्यः

काशीस्थ — मारवाड़ी सं० कालिजाध्यापक ।